39 Ta for night and darkness is new.

Ta is an abbreviation of tamas or tāmasī.

40 Tha for hole is new.

Mark nāga-lokaka as one of the synonyms.

41, 42 Da for serpent is new.

Da may be an abbreviation of dandaśūka or darvīkara, or it may be derived from some such word as dīrghajihva, dīrghapṛṣṭha, dīrgharasana, dṛgviṣa, dṛkkarṇa, dṛkśruti, dvija, dvijanman, dvijāti, dvijihva or dvirasana.

Sva-tantra is described as *Dakṣiṇāmūrtinā kṛta.*

43 Dha for flower and progeny is new.

Correct त्रिपुरातिलकं to त्रिपुरातिलके.

44 Na for salt is new.

Sūkara, vṛka and vārāha as the synonyms of salt are new.

Tripurāśiromaṇi is described as *trailokya-prathita.* Cf. I. 53, II. 19 and VII. 37.

45, 46 Pa for fish and tortoise is new.

Pha for fish is also new.

For the first time we are told that there is no difference in the matter of pronunciation and mantra-formulation between the aspirate and non-aspirate, *p*, *ph.* The only difference lies in the graphic form.

Bījārṇa "the bīja letter" should be omitted from Appendix VIII s. v. pa, pha.

47 Pha for crab and tortoise is new.

S'āradāpaṭala is described as *trailokya-prathita.* Cf. VII. 52.

48 Bha for wave is new.

Cf. note on III. 37.

49 Bha for Bhadrikā and others is new.

Bha is evidently an abbreviation.

Cf. note on II. 6.

50 Ma for frog is new.

Ma is an abbreviation of maṇḍūka.

Duli for frog is new. MW quotes some lexicon : "duli (or dulī ), a small or female tortoise ."

Our manuscripts show the forms durdura, dardura and dardurī, but MW knows only dardura.

51 Ya for wind is known to MW.

Vāgmin, vācāla, vaiśya, vīrā, śārṇa and vāpī for wind are entirely new. S'ārṇa is doubtful.

52 Ra for fire is well-known.

Cf. note on I. 59.

53 La for darkness, physical or mental, is new.

Cf. note on III. 31.

54 Va "cloud" is new, probably an abbreviation of vala, or valāhaka. Cf. MW "air, wind, the ocean, water" only from some lexicon. In this case va for air and wind may be derived from vāyu or vāta, and va for ocean and water may be an abbreviation either from varuṇa or from vāri.

Va "earth" is also new. In this case va may be an abbreviation of some such word as vasudā, vasudhā, vasumatī or vasuṃdharā.

Cf. note on III. 68.

55 S'aṃ and its synonyms are well-known, coming down from the Vedic period.

S'a might be an early abbreviation of śarman and śubha ?

Cf. note on I. 56.

56 Ṣa for lightning is new. So also rati.

57 Sa for Śakti and others is new.

S'akti, S'arman, S'arat and S'aṅkā in common parlance are quite different from each other. Here they are put down as synonyms, but it is uncertain as to what they stand for. Perhaps for Śakti "power." Sa is further extended to saḥ ( III. 72 etc.) and sauḥ ( I. 29 etc.), both new.

Cf. note on I. 29.

58 Ha for beauty is new.

Ha as sky is known to MW. In III. 72 all manuscripts show haṃ.

Siddhasārasvata is described as *nityaṃ māntrika-pūjita*.

Cf. note on III. 58.

59 Note that kṣa appears as a letter of the alphabet.

Kṣa as god is new.

Correct *Tridiśaṃ* to *Tridaśaṃ*. So also in Appendix VIII.

CHAPTER VI

1 Dvyakṣarāṇāṃ can mean here only two consonants, the

vowels, anusvāra and visarga being ignored.

3 Bagalāmukhī = Vagalāmukhī.

Indrākṣī does not appear in MW.

8 Dvipañcāśākṣaro for dvipañcāśadakṣaro.

9 Praśastikā for clay is new. It is to be inserted in App. VIII.

Hlīṃ for clay is also new.

11 Aṣṭāviṃśākṣaro for aṣṭāviṃśatyakṣaro.

12 Puṣkara for peak is new. It is known to MW as the name of a mountain in Puṣkara-dvīpa.

Mlauṃ "peak" does not exist in MW.

15 Gīrvāṇād daśamaṃ varṇam = ma.

16 Mark the variants of sauṣmakam !

CHAPTER VII

7 Tantramuktāvali, *tri-dive 'pi durlabha.*

16 Kubjikāsarvasva, *mamāpy atyanta-durlabha.* Cf. note on V. 28.

19 Āgamāmṛtamañjarī, *janair durlabhā.* Cf. note on VII. 61.

Durlabhaṃ, which grammatically refers to dhyānaṃ, but which is in reality intended for the book.

23 Correct -वालार्कं- to -बालार्कं-.

33 Viṣṇuṃ girīśam ari-kula-mathanaṃ hangs in the air.

39 Bhayān does not fit in.

43 S'yāmā-tantra, *sakalāgama-sāgara.*

54 Tripurāsarvasva, *tantrakottama.* Cf note on V. 17, 18.

58 Correct *mānasa-paṅkajāṃ* to *mānasa-paṅkaje.*

61 Āgamāmṛtamañjarī, *mamāpi durlabhā.* So also in V. 25. Cf. note on VII. 19.

63 Correct आगमार्णवपीपूषे to आगमार्णवपीयूषे.

Note that it is described as *bhuvane durlabha.*

64 Dvi-caturdaśa-varṇa-bhū-citaṃ is not clear.

73 Kulacūḍāmaṇi, *mantra-sāgara.* Cf. note on V. 15, 16.

Nirmitaṃ might be as good as *nirmite.*

80 Tripurāsarvasva, *Dakṣiṇāmūrtinā kṛta.* Cf. note on VII. 54.

85 Correct द्वि-जयनं to द्वि-नयनं.

88, 99 Āgamoddyota, *nānā-dhyāna-sarit-pati* and *mantra-sāgara* respectively. Cf. VII. 25, 65.

106 Bhairava-tantra, *tridaśārcita.* Cf. VII. 56.

113 Kailāsa is to be inserted in Appendix III.

☞In these notes MW stands for M. Monier William's Sanskrit-English Dictionary, 1899.

## THE WORKS OF DAKṢIṆĀMŪRTI

In Uddhāra-kośa there are a large number of references to Dakṣiṇāmūrti as the author. But they are not all clear in their import. The following is a collection of such of them as are rather clear:

| | |
|---|---|
| Āgamoddyota | VII. 25, 65 mayā svayaṃ viracita, mayā viracita, respectively. |
| Bhairava-tantra | VII. 56 mayā viracita. |
| Chinnāśiromaṇi | V. 19 mayā svayaṃ racita. |
| Jvālāśiromaṇi | VII. 29 mayā viracita. |
| Mantrasāgara | V. 14 sva-kṛti. |
| S'āradāpaṭala | VII. 52 mayā svayaṃ racita. |
| Sundarīsarvasva | IV. 16 sva-kṛti. |
| Sva-tantra | II. 7², III. 17, 31, IV. 9, 28, V. 34, 42 (Dakṣiṇāmūrtinā kṛta), 51, 53. |
| Tripurāsarvasva | V. 18, VII. 80 Dakṣiṇāmūrtinā kṛta. |
| Tripurāśiromaṇi | I. 53, II. 19 sva-kṛti, VII. 37 sva-kṛta. |
| Tripurasundarīsarvasva | III. 42 sva-kṛti. |
| Tripurā-ṭīkā | I. 46 sva-tantra. |
| Tripurātilaka | III. 27 sva-kṛti. |
| Vāmakeśvara | VII. 31, 46 mayā svayaṃ viracita, mayā viracita, respectively. |



At the end it is our pleasant duty to thank most cordially the authorities of the four Lahore libraries, who so kindly placed their manuscripts at our disposal.

# उद्धारकोशस्य
## विषयाः

### प्रथमः कल्पः



### द्वितीयः कल्पः

[1]एकदा स्फाटिकोर्वी[2]-भृत्-सानौ वन-समाकुले ।
संस्थितौ पार्वती-शंभू[3] लोक-रक्षणे[4]-तत्परौ ॥१॥

१ मङ्गलवचनं क ख ग छ ओं (ख नास्ति) श्रीगणेशाय नमः ॥ ओं (छ नास्ति) घ ओं नमः सरस्वत्यै श्रीगुरुचरणकमलेभ्यो नमः॥ ङ ओं नमो गुरवे श्रीसरस्वतीरूपाय ॥ श्रीगणेशाय नमः ॥ श्रीशारिकाभगवत्यै नमः ॥ ओं च स्व[स्]ति श्रीगणेशाय नमः ॥
२ ख °विं° ३ ग °शंभो ४ क °रक्षक°

पार्वती परमेशानं [1]प्रोवाच वचनं हितम्[1] ।
[2]देव-देव सुर-श्रेष्ठ दया-त्रैगुण्य-मानस ॥२॥

१-१ क प्रोवैचानं हितं परं ग प्रोवाच परसंहितं घ प्रोवाच मंत्रसंहितं ङ प्रोवाच परमं हितम् २ प्राक्पाठः ख श्रीपार्वत्युवाच

देवी भगवती देव महात्रिपुरसुन्दरी ।
अस्मिंश्च् चराचरे [1]व्यक्ते क्रूरे[1] केन प्रकाशिता[2] ॥३॥

१-१ क (व्यत्यासेन) क्रूरे व्यक्ते २ क (अपपाठः) प्रकाशतो

ईश्वर उवाच[1]

शृणु देवि प्रवक्ष्यामि गोप्यं तव कुतूहलात् ।
रेवा-तटे महा-पुण्ये श्रीगर्भा नाम सत्-पुरी[2] ।
अस्ति त्रैलोक्य-विख्याता सर्व-भू-तल-शेखरा ॥४॥

१ ङ नास्ति २ ख तत्पूरी ग सुन्दरी

तस्यां बभूव विप्रेन्द्र[1]-देव-गन्धर्व-सेवितम् ।
पुण्यं तपो-वन-पदं नाना[2]-वृक्ष-समाकुलम् ॥५॥

१ च देवेंद्र° २ च देव°

तस्मिंस् तपो-वने पुण्ये सेविते ऽपि मुनीश्वरैः[1] ।
[2]ऋषिः स्याद्[2] दक्षिणामूर्तिस् तद्-आराधन-तत्परः ।
नाना-शास्त्राब्धि पोतो[3] ऽपि सर्वागम-निधिर् अभूत्[4] ॥६॥

१ ग सुरेश्वरैः ङ सुरेश्वरैः । मुनीश्वरैरित्यपि पाठान्तरं २-२ च छ ऋषिस्तु ३ क च छ °पूतो
४ क त्वभूत्

एकदा स्नातुम् आयातो रेवां पुण्य-जलान्विताम् ॥७॥
प्राक्-पुण्य-कर्मणा तस्मै तुष्टा त्रिपुरसुन्दरी ।
[1]जल-मध्ये स्थिता गोप्त्री महात्रिपुरसुन्दरी[1] ॥८॥

१-१ क नास्ति

[1]स्व-मूलं शिक्षितो[1] देव्या[2] शुद्धं चामृत-रूपकम्[3] ।
स-त्वरं फल-दं गोप्यं स मुनीन्द्र-शिरो-मणिः ॥९॥

१-१ ग घ ङ मूलं च शिक्षितो ख स्वमूलं शिक्षितं २ ङ देव्याः
३ ग घ ङ च अमृतरूपिणम् छ अमृतरूपिणी

तदा प्रभृति तन्-मन्त्रं ध्यायन् स्तोत्रं जपन् हृदि ।
तत्-प्रभावान् महा-देवि ग्रन्थं कर्तुम् इयेष सः ॥१०॥
तद्-अनुग्रह-मात्रेण स मुनीश्वर-पूजितः ।
[1]ग्रन्थम् उद्धारकोशाख्यं चकार[2] मन्त्र-सागरम्[1] ॥११॥

१-१ ख नास्ति २ क अकरोन्

[1]अन्यान् नाना-विधान् ग्रन्थान् प्रेक्ष्य[2] त्रैलोक्य-पूजिते ।
तदा प्रभृति देवेशि प्रसिद्धं भूमि-मण्डले[1] ।
ग्रन्थम् उद्धारकोशाख्यं सर्वागम-विनिश्चितम्[3] ॥१२॥

१-१ ख नास्ति २ क ख प्रोक्त ३ छ °विनिश्चयं

श्रीदेव्य्[1] उवाच

[2]देव-देव जगन्-नाथ भक्तानुग्रह[3]-कारके[4] ।
श्रोतुम् उद्धारकोशाख्यं नानागमे[5]-विनिश्चितम्[2] ।
इच्छामि परमे[6]-प्रीत्या वक्तुम् अर्हसि धूर्जटे ॥१३॥

१ घ श्रीपार्वत्य् २-२ ग नास्ति ३ ख भक्त्या° ४ क °कारक:
५ घ ङ सर्वागम° ६ क अपरमं ग घ परया छ परमं

[1]ईश्वर उवाच[1]

शृणु पार्वति[2] वक्ष्यामि[3] ह्य् उद्धारं त्रिपुरादितः[4] ।
देवीनां दश-विद्यानां मन्त्रोद्धारम् अनुत्तमम् ॥१४॥

१-१ ङ श्रीईश्वरः  २ ग घ ङ देवि  ३ ग घ ङ प्रवक्ष्यामि  ४ = विंश-श्लोकादितः

[1]ग्रन्थम् उद्धारकोशाख्यं सर्वागम-विनिश्चितम्[1] ।
सर्व-ग्रन्थादि-पूज्यं[2] च तच् छृणुष्व[3] ब्रवीम्य् अहम् ॥१५॥

१-१ च छ नास्ति  २ ख °ग्रन्थाधिपूज्यं  ३ ग छृण्वस्व

तद्-अनुग्रह-मात्रेण सर्वान् उद्धार-संचयान्[1] ।
अब्रवीद् दक्षिणामूर्तिश् छात्रम्[2] अक्षोभ्य[3]-नामकम् ॥१६॥

१ क घ °संचयात्  २ ग ङ शास्त्रम्  ३ घ अक्षोभ°

शृणु छात्र[1] महा-भागिन्[2] देवी-भक्ति-समन्वित[3] ।
रहस्यं सर्व-लोकानां देवानाम् अपि दुर्लभम् ॥१७॥

१ ग शास्त्र  २ क ख ङ °भाग ग °भागि  ३ क °समन्वितः ग °समन्वितं

देवि[1] तस्मिन्न् अवसरे शिष्याय प्रिय-वादिने[2] ।
मुनीन्द्रो दक्षिणामूर्तिर्[3] अब्रवीद् ग्रन्थम् उत्तमम् ॥१८॥

१ प्राक्पाठः ग ङ च छ ईश्वर उवाच (ङ नास्ति)  २ क °वादिनेः  ३ ग देवतामूर्तिर्

भाषितं यत् [1]पुरा तेन[1] तत्[2]-प्रभावान् महेश्वरि[3] ।
[4]देवानां[5] देवतानां च[4] तच् छृणुष्व ब्रवीम्य् अहम् ॥१९॥

१-१ क पुरानेन  २ ङ त्वत्°  ३ क ख सुरेश्वरी  ४-४ ङ देवीनां दशविद्यानामित्यपि
पाठः  च (व्यत्यासेन) देवतानां च देवानां छ देवतानां च ह्युद्धारं
५ क देवेनां ख ङ देवीनां



# १

## तंत्रादौ[1] त्रिपुरा[2]-मन्त्रोद्धारः[3]

तद्[4] उक्तं वामकेश्वरे[5] तन्त्रे[4]—

लक्ष्मीः[6] परा मदन-वाग्भव-शक्ति-युक्ता ।
तारं[7] च भूति[8]-कमला कथितापि[9] विद्या[7] ॥२०॥

१ प्रारम्भे क ख ईश्वर उचाव ङ ओं २ ख नास्ति । ङ छ अत्रादौ च आदौ ३ ख नास्ति क त्रिपुरसुन्दरीमंत्रोद्धारः ग त्रिपुरोद्धाराणि मंत्र घ ङ त्रिपुरामंत्रोद्धाराणि च महाषोडशीमंत्रोद्धारः ४-४ क ख च छ नास्ति ५ घ ङ वामकेश्वर- ६ च छ लक्ष्मी ७-७ क द्विरुक्तिः ८ ख भूतिः ९ क (प्रथमवारम्) कथिताय च छ कथिता च

शक्त्य्[1]-आदिकं[2] च[3] विपरीततया च[4] प्रोक्ता[5][1] ।
श्रीषोडशाक्षर-विधिः शुभ-दो[6] ऽस्तु पूर्णः[7] ॥२१॥[8]

१-१ क द्विरुक्तिः २ क ग ङ शक्त्याधिकं ३ ख च छ तु ४ छ तु ५ घ ङ च छ प्रोक्तं ग प्रोक्त ६ क ख च छ शुभम् ७ ग छ पूर्णा ८ अधिपाठः क छ इति वामकेश्वरे ख इति वामकेश्वरे तंत्रे ङ च इति कामेश्वरे

उड्डामरे च—

क्षीरोद-संभवा भूतिः[1] कामं[2]-वाग्भवम् एव च ।
शक्तिः प्रणव-लज्जे ऽपि[3] लक्ष्मीः[4] शक्त्य्-आदिकं ततः ।
विपरीततया प्रोक्ता[5] विद्या श्रीषोडशाक्षरी ॥२२॥

१ ग भूति २ क ख च छ कामं ३ क ङ च छ ति ४ ग च लक्ष्मी ५ च प्रोक्त

रुद्रयामले[1] ऽपि—

हरिणाक्षी तथा माया काम[2]-राजश्[3] च वासना शरत्[4] ।
त्र्यक्षं तथा क्षामां[2] लक्ष्मीः[5] शक्त्य्-आदिकं[1] ततः ।
विपरीततया प्रोक्ता[6] विद्या[7] श्रीषोडशाक्षरी[7][1] ॥२३॥

१-१ क ख नास्ति २-२ ग नास्ति ३ च छ काममपि ४ क ख ग शरः घ ङ शर ५ ग घ ङ च लक्ष्मी ६ छ माया ७-७ च श्रीविद्या

### [ (१) अथ लक्ष्मी-बीजानि ]

उक्तं[1] च छिन्नारहस्ये—

लक्ष्मीः[2] पद्मा हरिणाक्षी सरोरुह-निवासिनी ।

कमला रुक्मिणी चैव [3]नारायण-प्रियापि च[3] ।
लक्ष्मी-बीजानि सप्तैव[4] कृत्रिमाण्य् अपराणि च[5] ॥२४॥

१ प्राक्पाठः सर्वेषु कोशेषु तत्राप्यस्मिन्नुद्धारकोशः (ग घ °कोशानि ङ °कोशे) २ ग ङ च लक्ष्मी घ लक्ष्मीं ३-३ ग नारायणिप्रिया प्रिये ङ नारायणप्रिया प्रिये ४ ख घ सप्तैवं ५ ग ङ च तु

अपरं च[1] त्रिपुरातिलके—

इमे द्वे[2] कमला पद्मा हरि-कान्ता तथैव च ।
श्रियो बीजानि पञ्चैवम् अनृतान्य्[3] अपराणि च[4] ॥२५॥[5]

१ घ नास्ति २ क द्वि ३ क अपराण्य् ख ग च अमृतान्य् ४ ङ च छ तु ५ अधिपाठः क ख च इति लक्ष्मीवीजानि ग घ श्री ॥ इति °वीजं ङ श्री ॥ इति °वीजं ॥ अथ श्री छ इति लक्ष्मीवीजं ॥ श्रीं

## (२) अथ[1] ह्रीं-बीजानि[2]

उक्तं चागमालंकारे[3]—

परा भूतिस् तथा लज्जा मायापि सकला कृशा[4] ।
समस्तापि तथा क्षामा[5] देवी[6] प्रणव-वीरकौ[7] ।
वारणार्ण[8] सुधा-बीजं[5] कृत्रिमाण्य् अपराणि च[9] ॥२६॥[10]

१ ङ नास्ति २ ग घ ङ ह्रींवीजनामानि च भुवनेश्वरीवीजानि ३ ख च छ चागमालंकारणे ४ ? क ख तथा छ कृशा: ५-५ च छ नास्ति ६ ? ख देवि ७ ? ग °वीरुकौ घ °मिरिता ८ क वरणार्ण ९ ङ च छ तु १० अधिपाठः ग घ ङ ह्रीं ॥ इति परावीजं

## (३) ततो मदन-बीजानि

उक्तं[1] च[2] भैरव[3]-तन्त्रे—

कामः [4]पञ्चेषुर् एव च मदनो[4] मन्मथस् तथा ।
मारः प्रद्युम्न-कन्दर्पाव्[5] अनृतान्य्[6] अपराणि च[7] ॥२७॥[8]

१ च नास्ति २ घ च नास्ति ३ क भैरवे° ख भैरवी° ४-४ ग पंचेष्व मदनो कन्दर्प- ५ ग प्रद्युम्नदर्पघ्नो ६ च छ कृत्रिमाण्य् ७ ङ च छ तु ८ अधिपाठः ग घ ङ क्लीं ॥ इति मदनवीजं

## (४) ततो वाग्भव-बीजानि

उक्तं च त्रिपुरासर्वस्वे[1]—

वाग्भवं चोर्ध्व[2]-बीजं च चारणं[3] चण्डिकेश्वरः[4] ।
चन्द्रो ऽपि चर्म[5]-वसनं वासनापि तथैव च ।
चार्वङ्गय्[6] अपि च[7] चर्माणम् असत्यान्य् अपराणि च[9] ॥२८॥[10]

१ ग ङ त्रिपुरासारसर्वस्वे घ त्रिपुरासारसर्वस्ये २ ग छ ऊर्ध्व° घ ङ मूर्द्ध° ३ छ चातृण ४ ग ङ चंद्रिकेश्वरः ५ च चंद्र° ६ क चार्मंग्य् ग चार्वंग्य् घ चार्वांग्य् ७ क नास्ति

८ क वर्माणम् ग ङ चर्माणाम् ९ घ ङ च छ तु १० अधिपाठः ग घ ङ ऐं (घ एम्) ॥ इति वाग्भवबीजं

## (५) तत[1]ः शक्ति-बीजानि[2]

उक्तं[3] छिन्नाशिरोमणौ—

शक्तिः शर्मापि[4] विज्ञेये[5] शरच-छङ्के[6] तथैव च ।
शक्तेर्[7] बीजानि चत्वारि कृत्रिमाण्य् अपराणि च[8] ॥२९॥[9]

१ ग घ अथ छ ततश्च २ ग घ ङ शक्तिबीजनामानि ३ च नास्ति । ग घ ङ उक्तं च ४ ग ङ चर्मापि छ शरमणि ५ क ख विज्ञेये घ विज्ञेयो ६ क ख घ च छ शरछेके ग शरछेके ७ ख ग ङ शक्ति- ८ ग घ ङ तु ९ अधिपाठः ग घ ङ सौ (घ सौं) ॥ इति शक्तिबीजं

## (६) तत[1] ओंकार-बीजानि[2]

प्रणवं च तथा[3] तारं त्र्यक्षं[4] तोमापि[5] त्र्यम्बकः[6] ।
त्रासर्स्[7] तारवं[8] एतानि बीजानि प्रणवस्य च ।
अपराणि[10] ह्य्[11] असत्यानि[11] मया[12] प्रोक्तानि पार्वति[13] ॥३०॥[14]

१ च नास्ति २ ग ङ तारबीजनामानि घ तारबीजानि नामानि ३ ख ग घ ङ धनुस् ४ क च त्र्यक्षं ङ त्र्यक्ष ५ घ तोगोपि च छ तोमोपि ६ घ त्र्यंविकाः च त्र्यंविकः छ त्र्याविकः ७-७ ग नास्ति ८ घ त्रास ९ ख ङ च तारक १० ग अपरा ११-११ च नास्ति १२ घ सैमया १३ क घ पार्वती १४ अधिपाठः ग घ ङ ओं ॥ इति तारबीजं

विपरीततया प्रोक्ता विद्या श्रीषोडशाक्षरी ॥३१॥

प्रकाशम्

श्रीं ह्रीं क्लीं[1] ऐं सौः[2]
ओं ह्रीं श्रीं
कै[3] ए ई[4] ल ह्रीं[5]
ह सकल ह्रीं सकल ह्रीं[3]
सौः[6] ऐं[7] क्लीं ह्रीं श्रीं ॥[8]

१ क क्लिं २ क ख सौः ग सौ ङ सौ ३-३ क स्तलीं: स्ह्रीः च क५ ह६ स४ छ क्लीं क्लीं क्लीं ४ ङ नास्ति ५ ङ नास्ति ६-६ छ (व्यत्यासेन) ऐं सौः ७ ख ग सौं ८ अधिपाठः क ख ग ङ इति त्रि(ख श्रीत्रि)पुरामंत्रोद्धारकोशः(ग ङ कोशानि) घ इति त्रिपुरामंत्रोद्धाराणि

उक्तं[1] च[2] आगमलहर्याम्[3]—

त्रिपुरा श्रीश् च वाग्देवी तारापि भुवनेश्वरी ।
मातङ्गी शारिका राज्ञी भेडा[5] ज्वालामुखी तथा ।
दश-विद्याः स्वयं चैता[6] भाषिताः कृत्ति-वाससा ॥३२॥

१ प्राक्पाठः क ख ग च ततो लक्ष्मीमंत्रोद्धारकोशः ॥ अतः परं क उक्तं च दशविद्यावां मन्त्रोद्धाराणि ख उक्तश् च दशविद्यानां मन्त्रोद्धारः ग उक्तं च दशविद्यावां ॥ अथ दशविद्या घ ङ अथ दशविद्या च उक्तं च दशविद्यानां २ च नास्ति ३ च आ° ४ आधिपाठः क ख अथ दशविद्याः(ख °द्या) ५ क वीडा ख भिंडा ग ङ भीडा ६ क एवा- च छ एता

वामकेश्वरे[1] षोडश-विद्याः[2]—

एता[3] दशैव षड् अन्या योजिता षोडशाक्षरी[3] ॥३३॥

१ घ नास्ति । क ग वामकेश्वरी घ वामकेश्वरतंत्रे २ घ नास्ति । क ख ग ङ षोडशाक्षरी विद्या(ख विद्याः) च षोडश महाविद्या ३-३ च छ नास्ति

दश-विद्या भद्रकाली तुरी च छिन्नमस्तका[1] ।
दक्षिणाकालिका श्यामा कालरात्र्य् अपि सुन्दरि[2] ॥३४॥

१ ख छिन्नमस्तिका २ क ख ग छ सुंदरी

एतासां मूल-मन्त्रेण योजितैकाक्षरेण च ।
ब्रह्मादि-दैवतैः[1] पूज्या विद्या श्रीषोडशाक्षरी ॥३५॥

१ ख °देवतै ग °दैवताः घ °दैवतै च छ °देवता

## २

## ततो[1] लक्ष्मी-मन्त्रोद्धारः

उक्तं[2] च[2] रुद्रयामले—

हरिणाक्षी परा[3] त्र्यक्षं लक्ष्मी-बीज-त्रयम्[4] इदम् ।
विपरीततया प्रोक्तं स-स्वरं फल-दायकम् ।
क्षामा[5] शङ्कापि नीरं तद्-अन्ते प्रोक्तं शिष्योत्तम ॥३६॥

१ च नास्ति २-२ च नास्ति ३ घ परातं ४ क च छ लक्ष्म्या ५ क च क्षमा

### (७) ततो[1] नीर-बीजानि[2]

उक्तं[3] चोड्डामरे[1]—

आपो[4] वनं तथा नीरं ठ-द्वयं च पयस् तथा ।
जलं[5] बीजानि प्रोक्तानि षड्[6] असत्यान्य् अपराणि[7] च[8] ॥३७॥[9]

१-१ क ख च छ उक्तं (च नास्ति) चोड्डामरे (च उड्डामरे) ततः (च नास्ति) स्वाहाबीजानि २ ग घ ङ नीरबीजनामानि ३ प्राक्पाठः ग घ ङ यद् ४ क च छ अपो ५ घ जल- ६ ग घ ङ ह्य् ७ क ख अन्यानि ८ ग ङ तु घ षट् ९ अधिपाठः ग घ ङ स्वाहा ॥ इति नीरबीजं

प्रकाशम्

ओं ह्रीं श्रीं
लक्ष्मि[1] महालक्ष्मि[2]
सर्व-काम-प्रदे
सर्व-सौभाग्य-दायिनि
अभिमतं प्रयच्छ
सर्वे सर्व-गते सर्व[3]-स्व-रूपे
सर्व-दुर्जय[4]-विमोचिनि
ह्रीं सौः[5] स्वाहा ॥[6]

१ क ख घ छ लक्ष्मी २ क ख घ छ °लक्ष्मी ३ क च छ नास्ति ४ ख °दुर्जयटा° घ °दुःख° ५ क च छ सः ख सौं सः ६ अधिपाठः क ख ग घ ङ छ इति मूलं

## ३

## ततः[1] सरस्वती-मन्त्रोद्धारः[2]

उक्तं[3] च[3] शारदापटले—

तारं लज्जां[4] वाग्भवं च[5] परा प्रणवम्[6] एव च ।
बीजं पञ्च-शिरो ज्ञेयम् अन्ते ज्ञेयं[7] नम इति ॥३८॥

१ च नास्ति २ च सरस्वतीमंत्रः ३-३ च नास्ति । ग य उक्तं च घ ङ यदुक्तं ४ च लज्जं छ लज्जां ५ क नास्ति ६ क प्रणव ७ क ख ज्ञेयो ग घ ङ प्रोक्तं

प्रकाशम्

ओं ह्रीं ऐं ह्रीं
ओं वाग्देव्यै नमः ॥

### (८) ततो[1] नमो-बीजानि[2]

उक्तं[3] चागमालंकारे[4][5]—

नमो विश्वं तथा स्तम्भं सौष्मकर्म्[6] अश्मरीं[7] तथा ।
अन्यानि कृत्रिमाण्य् एवं[8] सुरासुर-नमस्कृते ॥३९॥[9]

१ ग घ ङ च नास्ति  २ क नमो ग घ ङ नमोवीजनामानि  ३ च नास्ति  ४ च आ°  ५ ख च छ चागमालंकरणे  ६ ख सौष्मप्रोक्तंरेकम् छ सौकमम् ङ सौरमकम्  ७ ङ च अश्मरीं ८ क ख छ एवं  ९ अधिपाठः ग घ ङ इति मूलं

## ४

## ततस्[1] तारा-मन्त्र-निर्णयः[2]

उक्तं[3] च[3] भैरवसर्वस्वे—

तारं व्योषं तथा कान्तां[4] मायां[5] वाग्भवम् एव च ।
कूर्चं चैव महेशानि ह्य् अन्ते फट् ठ-द्वयं तथा ॥४०॥

१ च नास्ति  २ ग घ ङ तारमन्त्रनिर्णयः च तारामंत्रो ३-३ च नास्ति  ४ क कांतं च छ कांतां  ५ क छ मायां

### (९) ततो[1] ह्रां-बीजोद्धारः[2]

उक्तं[3] चागमसिन्धौ[4]—

स्कन्दं[5] व्योषं च[6] डिम्बं च[6] संयोज्य[7] ह-र्म्[8] इत्य् अतः ।
ह्रां[9]-बीजोद्धारम् एतद् धि चान्यद् अनृतम् आवदेत् ॥४१॥[10]

१ च नास्ति  २ ग व्योहांयवीजानि नामानि घ ङ व्योषवीजनामानि च ह्रांवीजोद्धारः  ३ च नास्ति  ४ च आ°  ५ क स्कंध ख स्कंदं  ६-६ ख घ चांडिंभं च ङ च डिंभं च  च छ तथा डिंवं  ७ क ख संयोज्यं  ८ क चरम्  ९ क च ह्रीं  १० अधिपाठः ग घ ङ ह्रां ॥ इति व्योषवीजं

### (१०) ततः[1] स्त्री-बीजोद्धारः[1]

उक्तं[2] च[2] वामकेश्वरे—

कान्ता च कमलाक्षी च प्रियापि परमापि च ।
लम्भापि[3] ललनां[4] लाजां[5] ह्य् असत्यान्य् अपराणि च ॥४२॥[6]

१-१ क ख ततस् स्त्रीवीजोद्धाराणि ग ततः कास्त्रींतावीतनामानि तत स्त्रींवीजोद्धाराणि घ तत कांतावीजनामानि ङ ततः कातावीजनामानि ततः स्त्रीबीजोद्धाराणि च स्त्रीं वीजोद्धारः  २-२ क ख च छ नास्ति  ३ ? ख लंभीपिं ग लंवापि  ४ च छ लत्तना  ५ ? क च लजा ख लाटा ङ छ लज्जा  ६ अधिपाठः ग घ ङ स्त्री (घ नास्ति । ङ स्त्रीं) ॥ इति कांतावीजं

(११) ततः[1] कूर्च-बीजोद्धारः[2]

उक्तं[3] च[3] छिन्नारहस्ये—

कूर्चं[4] कूलं तटं तीरम् असत्यान्य् अपराणि च[5] ॥४३॥[6]

१ च नास्ति २ क ख कूर्चबीजोद्धाराणि ग ङ कूर्चबीजनामानि घ कुर्चबीजं नाम
३-३ च नास्ति ४ क ग च क्तूर्चं घ कुर्चं ५ ग ङ च छ तु ६ अधिपाठः ग घ ङ
हूं (घ हुं ङ हूं) ॥ इति कूर्च(घ ङ कुर्च)बीजं

(१२) ततः[1] फट्-बीजोद्धारः[2]

अस्मिन्न्[3] एव[3]—

फट्[4] हरं[4] तुरगं[5] चान्यद् असत्यं तु[6] सुरेश्वरि[7] ॥४४॥

१ च नास्ति २ क ख ग घ ङ °द्धाराणि ३-३ ग ङ तत्रैव छिन्नारहस्ये घ तथा
छिन्नार च छिन्नारहस्ये ४-४ ख फट् एव । ग घ ङ (व्यत्यासेन) हरं पट् ५ क तुरंगं
च तुरंग ६ ख च ७ क सुरेश्वरी ग मदेश्वरि

प्रकाशम्[1]

ओं ह्रां[2] स्त्रीं ह्रीं ऐं हूं

उग्रतारे फट् स्वाहा[1] ॥

१-१ क नास्ति २ च ह्रीं

५

# ततो[1] भुवनेश्वरी-मन्त्रोद्धारः[3]

उक्तं[4] च[4] कुब्जिकासर्वस्वे—

प्रणवं च तथा माया कमला मन्मथस् तथा ।
अन्ते विश्वं नाम[5] मध्ये[5] प्रोक्तं[6] वै तु सुरेश्वरि[6] ।
प्रोक्तो ऽयं भुवनेश्वर्या मनुस् तुर्याक्षराभिधः ॥४५॥

१-१ क नास्ति २ च अथ ३ ख घ ङ भुवनेश्वरीमंत्रोद्धाराणि ग भुवनीश्वरीमंत्रोद्धाराणि
४-४ च नास्ति ५-५ ख महेशानि ६-६ ख नाम मध्ये सुरेश्वरि च छ सर्वदेवप्रपूजिते

(१३) अथ[1] मन्त्र-बीजोद्धारः[2]

उक्तं[3] च[3] स्व-तन्त्रे त्रिपुरा-टीकायाम्—

मन्त्रो[4] मनुर्[5] हरश् चैव[6] हनुर् वालं विदुर् बुधाः ।
बीजान्य् एतानि मन्त्रस्य कृत्रिमाण्य् अपराणि च[7] ॥४६॥
हर-बीजौ द्वौ मन्त्रः फट्[2] च ॥

१ च नास्ति २ क ख मन्त्रवीजोद्धाराणि ग ङ मनुवीजनामानि घ मनुवीजनाम ३-३ च नास्ति। ख घ उक्तं एव ४ ग ङ मंत्रे घ मंत्रं ५ क ग घ मनु ६ ग छ चैवं ७ ग ङ छ तु ८ क मंत्र च छ मंत्रं ९ क पट

प्रकाशम्

ओं ह्रीं श्रीं क्लीं

भुवनेश्वर्यै नमः ॥[१]

१ अधिपाठः क ख ग घ ङ इति मूलं च छ मूलं

६

## ततो[१] मातङ्गी-मन्त्रोद्धारः

उक्तं[३] च[४] कुल[३]सिद्धसंताने[५]—

तोम[६] काली तथा लक्ष्मीर्[७] वागुरा-द्वयम् एव च।

चारुकं रस[८]-बीजानि ह्य् आदौ प्रोक्तानि शंभुना ॥४७॥

१ च अथ २ क ग ङ मातंगीवीजोद्धाराणि ख छ मातंगीवीजोद्धारः घ मातंगीवीजमंत्रोद्धाराणि ३-३ च नास्ति ४ ग ङ हि ५ ख कूलसिद्धसंताने ग कुलसिद्धांते घ कुलसिद्धांतसंताने ६ ग उमा च तोमः ७ क ग च छ लक्ष्मी ८ च सर्वं

अन्ते जिह्वा तथा पद्मं लज्जा नीरजम् एव च।

वासना पङ्कजं चैव वनं प्रोक्तं तु शूलिना[१] ॥४८॥[२]

१ च शंभुना २ अधिपाठः क ख ग ङ छ इति मातंगी(ख °गि)मन्त्रोद्धारः

### (१४) अथ[१] काली-बीजोद्धारः[२]

उक्तं[३] च[३] कुलचूडामणौ—

काली कुन्ती रसज्ञा[४]पि जिह्वा[५]पि रसना तथा।

क्रीं-बीजानि च ह्य् एतानि कृत्रिमाण्य् अपराणि च ॥४९॥[६]

१ प्राक्पाठः ग घ ङ तत्र जिह्वावीजनामानि २ क ख ग घ ङ कालीवीजोद्धाराणि ३-३ च नास्ति ४ क रसजापि ङ रसंज्ञापि ५ क जिकापि ख त्रिजिकापि ६ अधिपाठः ग घ ङ क्रीं ॥ इति जिह्वावीजं

### (१५) अथ[१] वागुरा-बीजोद्धारः[२]

वागुरा वायु-पूज्यापि वान्तुदास्य[३] त्रि-बीजकम्[४]।

प्रीं-बीजानि तु[५] प्रोक्तानि[६] ह्यँ असत्यान्य् अपराणि तु[९] ॥५०॥[१०]

१ घ च नास्ति २ क ख वागुरा(ख र)वीजोद्धाराणि ग ङ वागुरावीजनामानि घ वागुरावीजनाम च वागुरा एव ३ ? क ङ च छ वांतदास्य ख चांतुचांतदास्य वातुदाप्य घ वांतुदास्य ४ क प्रवीजकं घ तिवीजकं ५ क तथा घ च ६ क प्रोक्तम् ७ क नास्ति ८ क अनृतान्य् ९ क ख च १० अधिपाठः ग ङ प्री ॥

इति वागुरावीजं घ प्रा

## (१६) अथ[1] चारुक-बीजोद्धारः[2]

मुण्डमाला-तन्त्रे[3]—

चारुकं चैव चार्वङ्गी[4] चारुतोच्छूनं[5]-बीजकम् ।

चतुष्टयं च[1] छ्रौँ[6]-बीजम् असत्यान्य् अपराणि च[1] ॥५१॥

चार्वङ्गी-बीजौ[7] ह्रौ छ्रौँ[8] ऐं ॥

१-१ घ नास्ति २ क चारुकवीजोद्धाराणि ख चारुकंछ्वीजोद्धाराणि ग ङ चारुकवीजनामानि ३ क नास्ति ४ ख चार्वांगि ग चार्वांगी ५ क चारुतोच्क्षून° ख ग चारुतोभुन° च चरुतो छून्थ° ६ क क्ष ङ तु ७ ख श्रीं° ङ च्छ्रीं° च छ्री° छ श्छीं° ८ ग भ्रीं घ छूं च छ्री छ श्छीं

## (१७) ततः[1] पद्म-बीजोद्धारः[2]

उक्तं[3] च[3] वामकेश्वरे[4]—

पद्मं[5] पङ्कज-पयोजे[6] नीरजम् अम्बुजं तथा ।

पद्म ठकार-बीजानि ह्य् अनृतान्यूँ[7] अपराणि च ॥५२॥[8]

१ च अथ २ क ख पद्मवोजोद्धाराणि ग घ ङ पद्मवीजनामानि ३-३ च छ नास्ति ४ अधिपाठः च तंत्रे ५ क ख घ पद्म ६ क ङ °पयोजौ ख °पयोजो च पयो ७ ग घ ङ असत्यान्य् ८ अधिपाठः ग घ ङ ठ (घ ठम्) ॥ इति पद्मवीजं प्रकाशम्

ओं क्रौं[1] श्रीं प्रीं प्रीं छ्रौं[2]

उच्छिष्ट-चण्डालिनि[3] देवि महा-पिशाचिनि मातंगि[4] देवि

क्रीं ठः ह्रीं[5] ठः[5] ऐं ठः स्वाहा ॥[6]

१ क क्रौं घ क्लीं छ क्रीं क्रीं २ च श्छी ङ श्छीं ३ घ ङ °चांडालिनि ( घ °नी ) ४ घ मातंगी ङ मातंगिनि ५-५ ङ नास्ति ६ अधिपाठः सर्वत्र इति ( च नास्ति ) मातंगी(ख °गि)मूलं

७

# अथ शारिका-मन्त्रोद्धारः

उक्तं[1] च[2] स्वै[3]-कृतौ[1] त्रिपुराशिरोमणौ—

तारं[4] मायां[5] श्रियं[6] कूर्चं[7] सिन्धुरं[8] शून्यम् एव च।
कल्याणं शारिका-देव्या बीजं सप्ताक्षरं स्मृतम् ।
अन्ते स्तम्भं च विज्ञेयं[9] शारिका-मूलम्[10] उत्तमम् ॥५३॥

१-१ च नास्ति २ ङ छ नास्ति ३ ग सु° ४ ग घ तारा ङ तारां ५ ख घ ङ माया ग मारा ६ क शिरं ग घ श्रिया ङ श्रियां ७ क घ ङ क्तूर्चं ८ घ सिंधूरं ९ ख वितथं १० ग घ ङ °मंत्रम्

## (१८) ततः[1] सिन्धुर-बीजोद्धारः[2]

उक्तं[3] च[3] वामकेश्वरे तन्त्रे[4]—

सिन्धुरं[5] च गजं घोणां[6] हस्तिनं[7] द्विरदं तथा ।
हां-बीजानि[8] च[9] चत्वारि कृत्रिमाण्य् अपराणि च ॥५४॥[10]

१ च अथ क ख सिंधुरवीजोद्धाराणि घ ङ सिंधुरवीजनामानि घ सिंदूरवीजानि ३-३ च नास्ति ४ च छ नास्ति ५ क सिधुरं घ सिंदूरं ६ ? ख घोयोण घ योगा ७ क ख च छ हस्तं च ८ ? ग हींक्रींवीजानि घ हींक्रांवीजानि ङ हांआंवीजानि च छ प्रुंवीजानि ९ ग घ छ नास्ति १० अधिपाठ: ग घ ङ क्रीं (घ क्राम् ङ हां) ॥ इति सिंधुर-(घ सिंदूर)वीजं

## (१९) ततः[1] आकाश-बीजानि[2]

उक्तं[3] च[3] भैरवे[4] तन्त्रे—

शून्यं खम् अम्बरं व्योम आं-बीजं च चतुष्टयम् ।
हकारं चैवं[5] विज्ञेयम् उक्तं च रुद्रयामले ।
असत्यम्[6] अपरं ज्ञेयं तारा-भक्ति-समन्वितं[7][6] ॥५५॥[8]

१ च अथ २ ग घ ङ शून्यवीजनामानि ३-३ च नास्ति ४ क भैरवी- घ ङ च छ भैरव- ५ ग घ ङ चापि ६-६ क नास्ति ७ क ख ग ङ °समन्वितम् च °समन्विते ८ अधिपाठः ग घ ङ आं (ग आ) ॥ इति शून्यवीजं

## (२०) ततः[1] कल्याण-बीजानि[2]

अस्मिन्न् एव—

कल्याणं चैव शर्मापि[3] शं शुभं[4] च चतुष्टयम्[1] ।
अनृतम्[5] अपरं[5] ज्ञेयं पर्वतेश्वर-नन्दिनि[6] ॥५६॥
शर्म-बीजौ[7] द्वौ[8] सौ: शं च ॥

१-१ क नास्ति २ ग घ ङ कल्याणवीजनामानि ३ ख शर्माणि ४ ख घ शूभं ५-५ क असत्यमपरं ग घ ङ (व्यत्यासेन) अपरमनृतं च अनृतं ह्यपरं ६ क सर्वतेश्वर° ग °नंदिने च °नंदनि ७ ☞ इतः प्रभृति घ-पाठः परिशिष्टे निवेशितः ८ क ख नास्ति

प्रकाशम्

ओं ह्रीं श्रीं

हूं[1] ह्रां[2] आं शां

शारिकायै[3] नमः ॥[4]

१ ग हूं २ ? क हें ख फें ग फ्रां च छ पुं ३ ख शारिकाभगवत्यै ४ अधिपाठः क ख ग ङ छ इति (छ नास्ति) मूलं

८

## ततो[1] राज्ञी-मन्त्रोद्धारः[2]

तारं लज्जा[3] श्रियम् अग्निः[4] कामं शक्तिः[5] षड्-अक्षरः ।
बीजं च षट्-शिरो ज्ञेयं ततः पल्लवम् उद्धरेत् ॥५७॥

१ च अथ २ क ख घ राज्ञीमंत्रोद्धाराणि । अधिपाठः च श्यामातंत्रे ३ च लज्जां ४ क नास्ति ५ ख ग शक्ति

भगवत्यै तथा राज्यै ह्रीं[1] अन्ते[1] माया[2] च ठ-द्वयम् ।
एभिः[3] सह[4] मनुः[5] प्रोक्तो राज्ञ्याः[6] पञ्चदशाक्षरः ॥५८॥

१-१ च नास्ति २ छ मायां ३,४ च नास्ति ४,५ ग (व्यत्यासेन) मनुः सह ६ ख राज्ञः ग राज्ञी ङ राज्ञा

## (२१) ततो[1] ऽग्नि-बीजोद्धारः[2]

अग्नी[3] रेफश् च वह्निश् च हुतभुग् हव्यवाहनः ।
रं-बीजोद्धारम् एतद्[4] धि कृत्रिमम्[4] अपरं स्मृतम् ॥५९॥[5]

१ ग ङ च नास्ति । छ अथा- २ च नास्ति । क ख ग्निवीजोद्धाराणि ग ङ अग्निवीजनामानि ३ क ख ग अग्नि च छ अग्निः ४-४ क एतं तु ह्यसत्य् ५ अधिपाठः ग ङ रं ॥ इति अग्निवीजं

प्रकाशम्

ओं ह्रीं श्रीं

रां[1] क्लीं[2] सौः

भगवत्यै राज्यै ह्रीं स्वाहा ॥[3]

१ छ रा २ ख च सौं ३ अधिपाठः क ख ग ङ छ इति (ग ङ छ नास्ति) राज्ञी(क राज्यो)मूलं श्यामातंत्रे

९

## अथ[1] भेडा-मन्त्र-निर्णयः

तद् उक्तं कुलचूडामणौ[1]—

प्रणवं च विभूतिश् च हरिकान्ता तथैव च ।
वियच्-छक्त्य्-अग्नि-बीजानि संयोज्य वाग्भवं तथा ॥६०॥

१-१ क ख छ कुलचूडामणौ भीडा(छ भेडा)मंत्रनिर्णयः च भेडामंत्रो कुलचूडामणौ

मदनं च तथा शङ्खं[1] बीजं सप्ताक्षरं वदेत्[2] ।
ठ-द्वयेन समायुक्तः प्रोक्तो विंशाक्षरो मनुः ॥६१॥

१ ङ शंख २ च छ स्मृतं

प्रकाशम्

ओं ह्रीं श्रीं
ह्स्रं[1] ऐं क्लीं सौः[2]
भेडाभगवति[3] हंसरूपिणि स्वाहा[4] ॥[5]

१ क हूं ख हस्रं ग ह्रां ङ रतुं २ ग सौ च सौं ३ क ख ङ भीडाभगवति(क °ती)
४ ☞ इतोऽवधिः घ-पाठः परिशिष्टे निवेशितः ५ अधिपाठः च-वर्जं सर्वत्र इति मूलं

१०

## अथ[1] ज्वालामुखी-मन्त्रोद्धारः[2]

शारदातिलक-टीकायाम्[3]—

तारं लज्जां[4] श्रियं चैवम् अन्ते कूर्चं[5] हरं पयः ।
बीजं षड्-अक्षरं[6] देव्या ज्वालामुख्याः सुरेश्वरि ॥६२॥

१ घ नास्ति २ घ नास्ति । ख ग ङ छ ज्वालामुखी(ख °खि)मंत्रनिर्णयः च ज्वालामुखी-मंत्रः ३ क ख च छ शारदाटीकायां ४ च खण्डितम् । क ख ग घ ङ लज्जा
५ घ कुर्चं ६-६ ? क अक्षरं ख ग घ च छ च अक्षरं ङ श अक्षरं

प्रकाशम्

ओं ह्रीं श्रीं
ज्वालामुखि मम शत्रून्[1] भक्षय भक्षय[2] हूं[3] फट् स्वाहा ॥[4]

१ ख ग सर्वशत्रून् २ क नास्ति ३ क ग घ च छ हुं ४ अधिपाठः क ख ग घ ङ च इति मूलं

दश-विद्या मया प्रोक्ता[1] यथागम-विनिश्चिताः ।
साधकेष्ट-प्रदा देव्यो[2] नाना-रत्न-विभूषिताः ।
एतासां दश-विद्यानां गुणान् वक्ष्यामि त्वं शृणु ॥६३॥

१ ग घ ङ ख्याता २ क ग ङ देव्या घ देवि छ देव्यौ

दक्षिणामूर्तिर् उवाच[1]

मुक्तिं ददाति त्रिपुरा लक्ष्मीं[2] लक्ष्मीर्[2] ददाति च ।
विद्यां ददाति वाग् देवी प्रत्येकं जन्म-निश्चलाम्[3] ॥६४॥

१ क नास्ति २-२ घ (व्यत्यासेन) लक्ष्मीर्लक्ष्मीं ३ ? क छ °निश्चलं घ °निश्चलात् च °निश्चयं

तारा[1] तारयते[1] सिन्धुं[2] ह्य् ऐश्वर्यं भुवनेश्वरी[1] ।
मातङ्गी राक्षसी[3] शत्रु[4]-भीतिं हरति नित्यशः ।
शारिका शं ददात्य् एव राज्ञी राज्यं प्रयच्छति ॥६५॥

१-१ कखचछ नास्ति २-२ ग ज्ञानं तथा मोक्षं ३ ङ राक्षति च राक्षरी ४ घ ङ शत्रोर्

भेडा[1] देवी ददात्य् एवं[2] संततिं विश्व-ख्यापिताम्[3] ।
धनं ज्वालामुखी देवी भक्तेभ्यः सा[4] प्रयच्छति ॥६६॥

१ क ख भीडा २ ख च छ एवं ३ क °ख्यापितं ग घ ङ °व्यापिनी(ङ °नीं) ४ घ ङ छ सं-

दश[1]-विद्या यथा एता[2] भक्तेभ्यः[1] फलम् इष्ट-दाः[3] ।
प्रयच्छन्ति महा-देवि[4] पूजा-होम-जपादिभिः ॥६७॥

१-१ ग नास्ति २ क ख चैता ३ घ इष्टदा अन्यत्र इष्टदं ४ ग °देव्यः घ ङ °देव्या

इति[1] श्रीदक्षिणामूर्ति-विरचिते[2] उद्धारकोशे[3]
सर्वागमार्णवे[4] दश-विद्या-मन्त्रोद्धार-कोशे[5]-गुणाख्यानं[6] नाम[1]
प्रथमः कल्पः[7] ॥

१-१ घ इति उद्धारकोशे दशविद्यामंत्रनिर्णय: २ ग ङ श्रीदक्षिणामूर्तिमुनिविरचिते ३ क ग छ उद्धारकोश- ४ क शोगनिर्णय च छ सर्वागमविनिश्चये ५ ङ °कोशे ६ क °गुप्ताख्यं च °गुणाख्यं ७ ग ङ पटलः

## [1]ततम् त्रिपुरा-षट्-सखीनाम् उद्धार-गुणाः[2][1]

ईश्वर उवाच[3]

श्रृणु देवि प्रवक्ष्यामि त्रिपुरां परिवारिताम् ।
षट्-सखीभिर्[4] [5]अहं तासां मन्त्रोद्धारं[6] ब्रवीमि ते[7] ॥१॥

१-१ ग घ नास्ति २ क ङ उद्धारगुणानि ख उद्धारगुणाः । गुणेति मंत्रेति मंत्राणि नेयानि च छ उद्धारः ३ ङ नास्ति ४ ख घ षण्मुखीभिर् ५ ☞ इतः प्रभृति क नास्ति ६ ख मन्त्रोद्धारान् ७ घ अहं

अक्षोभ्य उवाच[1]

गुरो विधातृ-संभूत नाना-शास्त्र-विचक्षणे[2] ।
श्रोतुम् इच्छाम्य् अहं [3]मन्त्रान् सर्वांश्[3] च[4] मुक्ति-हेतवे ॥२॥

१ घ नास्ति २ ग घ ङ °विशारद ३-३ ख (व्यत्यासेन) सर्वान्मंत्रांश् घ तंत्रान्सर्वा ४ ग घ ङ सं-

दक्षिणामूर्तिर् उवाच[1]

श्रृण्व् अक्षोभ्य महा-भागिन्[2] सर्वं वक्ष्यामि तत्त्वतः ।
दश-विद्या भद्रकाली [3]तुरी च[3] छिन्नमस्तका[4] ।
दक्षिणाकालिका श्यामा कालरात्रीति सुन्दरि[5] ॥३॥

१ ङ नास्ति २ घ °भाग ३-३ ख तुरि च ग तुरीय घ तुरिया ङ तुरीया च तुरी ४ ख छिन्नमस्तिका ५ ग घ ङ सुंदरी

षट्-सखीनाम् अहं तासां मन्त्रोद्धारं[1] ब्रवीमि ते ॥४॥

१ ख मन्त्रोद्धारान्

### ११

## तत्रादौ[1] भद्रकाली-मन्त्रोद्धारः[2]

[3]काली-त्रयं कूर्च[4]-युग्मं लज्जा-युग्मं च भद्रिका ।
भद्रकालि[5]-पदं ब्रूयाद्[6] बीजानि प्रतिलोमतः ।
ठ-द्वयेन समायुक्तो भद्रकाली[7]-महा-मनुः ॥५॥

इति श्यामा-तन्त्रे[8] ॥

१ च अथ २ ख घ भद्रकालि° ग ङ °मंत्रोद्धाराणि च °मंत्रो ३ प्राक्पाठः च मुंडमालातंत्रे छ उक्तं च मुंडमालातंत्रे ४ घ कुर्चं° ५ घ भद्रकाली° च भद्रिकालि° ६ घ तथा ७ ख भद्रकालि° ८-८ घ च नास्ति

### (२२) अथ[1] भद्रिका-बीजोद्धारः[2]

उक्तं[3] च मुण्डमाला-तन्त्रे[3]—

भद्रिका[4] भास्वती[5] भीमा भैं-बीज-त्रितयं[6] स्मृतम् ।
अनृतम् अपरं ज्ञेयं ब्रह्मान्वय-समुद्भवं[7] ॥६॥

१ ग घ च नास्ति २ घ नास्ति । ख °बीजोद्धाराणि ग ङ °बीजनामानि ३-३ घ च छ नास्ति ४ ख ग ङ च भद्रीका ५ ख भाश्वति च भवति ६ ग भैंभींवीजत्रयं घ छ भैरवीजत्रितयं ७ ख °समुद्भवः ग घ °वं च °वे

प्रकाशम्

क्रीं क्रीं क्रीं
हूं[1] हूं[1] ह्रीं ह्रीं[2]
भैं भद्रकालि भैं
ह्रीं ह्रीं हूं[3] हूं[4]
क्रीं क्रीं क्रीं[5]
स्वाहा ॥[6]

१ छ हूं २ ग नास्ति ३ घ ह्रे छ हूं ४ घ हू छ हूं ५ ग घ च नास्ति ६ अधिपाठः ख ग घ ङ छ इति भद्रकाली(ख घ °लि)मूलं

## १२

## अथ तुरी-मन्त्रोद्धारः[1]

उक्तं[2] च[3] स्व-तन्त्रे—

प्रणवं तारका[4] ज्योतिस् तारा ह्य् अन्ते नम इति ।
तुर्या[5] मूलम् इदं प्रोक्तं स्व-तन्त्रे शंभुना स्मृतम् ॥७॥

१ ख तूरिमंत्रोद्धारः च तूरीमंत्रः २ च नास्ति ३ ग घ च नास्ति ४ ख तारकं घ तारिकं ५ ख तूर्या

### (२३) अथ तारका-ज्योतिस्-तारा-बीजोद्धारः[1]

उक्तं[1] च[2] वामकेश्वरे[3] तन्त्रे—

ऋक्षं[4] भं तारका ज्योतिस् तारा बीजानि पञ्च च ॥८॥

१ ख छ तारक(छ तारा)ज्योतिस्तारामंत्रोद्धाराणि(छ °द्धारः) ग घ ङ तारका(घ तारिका)-ज्योतिस्तारवीजोद्धाराणि च तारावीज २-२ च नास्ति ३ ग घ कामिश्वरे ङ च छ कामेश्वरी- ४ ग च त्र्यक्षं ५ ख घ तारिका ६ ग तार-

प्रकाशम्[१]

ओं त्रृं[२] त्रौं[३] त्रों[४] महातुर्यै नमः ॥[५]

१ ग घ ङ नास्ति २ ख त्रु ग तं घ ङ त्रूं ३ ग नास्ति । ख त्रां ४ छ त्रौं
५ अधिपाठः ख इति क्षूरिमंत्रोद्धारः ग घ ङ इति मूलं छ इति तुरीमूलं

## १३

## अथ छिन्नमस्तका-मन्त्रोद्धारः[१]

उक्तं[२] च[३] छिन्नाशिरोमणौ—

त्र्यम्बकः[४] सकला पद्मा चारुकं च सुरेश्वरि ।
अन्त उच्छूनं[५]-बीजं च फट्[६] ठ-द्वय-समायुतम्[७] ॥९॥[८]

१ ख ग घ ङ छिन्नमस्ता(ङ °मस्तिका)मंत्रोद्धार: च छिन्नमस्तकोद्धारः २ च नास्ति
३ ग घ ङ च नास्ति ४ ग च छ त्र्यंबिकः घ त्र्यंबिका ङ त्र्यंबिकास् ५ ख उच्छंन° ग तछून° घ उछिष्ट° ङ उच्छून्न° च तछून्य° छ उछन° ६ ग छट् ङ छट
७ घ °संयुतं ८ अधिपाठ: ख इति उद्धारः छ उद्धारः

प्रकाशम्

ओं ह्रीं श्रीं छ्रीं[१] छिन्नमस्तके[२] छ्रीं[३] फट् स्वाहा ॥[४]

१ च श्छ्रीं २ ख छिन्नमस्ते ३ च श्छीं ४ अधिपाठः ग घ ङ इति छिन्नमस्ता-(ङ छिन्नमस्तिका)मूलं

अथ द्वि-भेदात्मके[१] ॥

उक्तं[२] चागमलहर्याम्[३]—

लक्ष्मीं[४] लज्जां[५] तथा मायां[६] मात्रां द्वादशकाम् अथ[७] ।
वज्रवैरोचनीये द्वे मायें[८] फट्-स्वाहया युते ॥१०॥[९]

१ ग त्रिभेदात्मके घ द्विभेदात्मिके २ च नास्ति ३ च आ° ४ ख ग घ लक्ष्मी
५ ग ङ लज्जा ६ ङ माया ७ घ अपि ८ ग नास्ति ९ अधिपाठः ख ग घ ङ छ इत्यु(ख नास्ति) उद्धारः

प्रकाशम्[१]

श्रीं[२] ह्रीं ह्रीं[३] ऐं वज्रवैरोचनीये ह्रीं ह्रीं फट् स्वाहा ॥

१ ग छ नास्ति २ प्राक्पाठः ख ओं ह्रीं ३ ख ङ नास्ति

## १४

## अथ दक्षिणा[1]काली-मन्त्रोद्धारः

उक्तं[2] च[2] श्यामारहस्ये[3]—

कुन्ती[4]-त्रयं[5] तीर-युग्मं क्षामा-युग्मं ततो ऽभिधर्म्[6] ।

दक्षिणे[7] कालिकेत्यू[8] एवम् अन्ते काली-त्रयं पुनः ॥११॥

१ ख घ दक्षिण° २-२ च नास्ति ३ घ श्यामातंत्रे ४ ☞ इतोऽवधिः क-लोपः
५ ग °त्रयीं ६ ग छ भिधां ७ ङ च छ दक्षिण- ८ = कालिके इत्यू

कूर्च[1]-युग्मं परा-युग्मं पयश् चैव सुरेश्वरि ।

दक्षिणा[2]कालिकायाश् च मनुर्[3] द्वाविंशद्-अक्षरः ॥१२॥

१ क च छ कूल° ग कूर्चा° घ ङ कुर्च° २ ग ङ दक्षिणायाः ३ क छ हनुर्

प्रकाशम्

क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं

दक्षिणे कालिके

क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं

स्वाहा ॥

## १५

## अथ श्यामा-मन्त्रोद्धारः

उक्तं[1] च[1] श्यामा-तन्त्रे[2]—

हरिणाक्षीं[3] तथा लज्जां[4] कालीं[5] जिह्वा-चतुष्टयम् ।

ततः सुधा-रसे श्यामे कृष्ण-शापं विमोचय ।

अमृतं[6] स्रावय स्वाहा श्यामा-मन्त्रम्[7] उदाहृतम्[6] ॥१३॥

१-१ घ च नास्ति २ घ नास्ति ३ क ग घ ङ च हरिणाक्षी ४ घ ङ लज्जा
५ ख कालिं ग घ ङ काली ६-६ ग नास्ति ७ क ख च °तंत्रम्

प्रकाशम्[1]

श्रीं ह्रीं[2] क्रीं[3]

क्रीं[4] क्रैं क्रौं क्रः

[5]सुधा-रसे श्यामे
कृष्ण-शापं विमोचय[2]
अमृतं स्त्रावय[6]
स्वाहा[5] ॥[7]

१ ग च नास्ति २-२ ग नास्ति ३ ख च छ क्रां ४ घ क्रों । अधिपाठः च क्रूं
५-५ ख नास्ति ६ घ श्रावय२ ङ स्त्रावय२ ७ अधिपाठः क ग ङ छ इति श्यामामूलं

## १६

## [1]अथ कालरात्री-मन्त्रोद्धारः[1]

[2]उक्तं च[2] कालरात्री-कल्पे—

प्रणवं वासना माया [3]मन्मथः कमला तथा[3] ।
बीजं पञ्च-शिरो[4] ज्ञेयं ततः पल्लवम् उद्धरेत् ॥१४॥[5]

१-१ ख नास्ति २-२ घ च नास्ति ३-३ क ख छ मन्मथ: कमलोद्भवम् इति दोषः। मन्मथः कमला तथा ग घ ङ मन्मथः कमलोद्भवम् इति दोषः । मन्मथः कमला तथा इत्ययं पाठो रम्यतरः ४ क पंचाक्षरं ५ अधिपाठः ख घ ङ छ इति (घ ततो) छिन्नारहस्ये

ततो मध्ये ऽभिधां[1] त्यक्त्वा[2] ह्य् अन्ते सर्वं वश्यं[3] कुरु ।
[4]कुरु नीरो देहि-युग्मं[4] [5]मध्ये त्यक्त्वाभिधां[6] पुनः[5] ।
गणेश्वर्यै [7]तथा चान्ते[7] विश्वं च समुदाहृतम् ॥१५॥

१ क भिधांस् ग घ भिधा २ ख कृत्वा ३ सर्वत्र वशं ४-४ ख ग घ ङ च छ नीरो (च नीरं) देहियुग्मं(ग °युगो घ ङ °युगं)मध्ये ५-५ च छ नास्ति। ग घ ङ त्यक्ताभिधा(घ ङ °धां) च कामिनि ६ क ख °भिधं ७-७ क ख तथांते च

प्रकाशम्[1]
ओं ऐं ह्रीं क्लीं श्रीं
काह्लेश्वरि[2] सर्व-जन-मनो-[3]हरि
सर्व-मुख-स्तम्भिनि
सर्व-राज-वशं-करि सर्व-दुष्ट-निर्दलिनि
सर्व-स्त्री-पुरुषाकर्षिणि
वन्दी-शृङ्खलास्[4] त्रोटय त्रोटय
सर्व-शत्रून्[5] भञ्जय भञ्जय द्वेषान्[6] निर्दलय निर्दलय
सर्वास् स्तम्भय स्तम्भय मोहनास्त्रेण द्वेषिणम्[7] उच्चाटय उच्चाटय[3]
सर्वं[8] वश्यं कुरु कुरु स्वाहा ॥

देहि[९] देहि[१०] सर्वं[११]

काल-रात्रि कामिनि[१२]

गणेश्वर्यै नमः[९] ॥[१३]

१ क नास्ति २ ? क काह्लेश्वरी ग कहेश्वरि घ काह्लीश्वरि ङ कामेश्वरि ३-३ घ नास्ति ४ ग वंधीं शृंखलां ङ बंधीशृखलां ५ ग सर्वद्वेषान् ङ सर्वशषां छ शत्रून् ६ क हेषिणो च द्वेषी ७ ख ग द्वेषणम् च द्वेषिणाम् ८ घ नास्ति। क ख ग ङ सर्वं ९-९ घ नास्ति १० क नास्ति ११ छ-वर्जं सर्वत्र सर्वं- १२ क कामनि ख कागामिनि च नामिनि १३ अधिपाठः क ख ङ छ इति कालरात्रि(ङ °त्री)मूलं ग इति रात्रिमूलं घ इति मूलं

—⁓—

## अथ[१] भेदाः[२]

### (१) [ अथ त्रिपुरायाः ]

देवेशि[३] त्रिपुरा-वालं[४] विज्ञेयं द्वादशात्मकम् ॥१६॥

१ ☞ इतः प्रभृति घ-पाठः परिशिष्टे निवेशितः २ क ख भेदानि ग भेदः ३ ख छ देवि त ४ अधिपाठः क त्रिपुरामंत्रमुत्तमं

उक्तं[१] च[१] मुण्डमाला-तन्त्रे—

द्वादशात्मकं विज्ञेयं त्रिपुरा-मन्त्रम्[२] उत्तमम्[२]।

केवलं मुक्तये देवि यत् प्रोक्तं तच् छुभं स्मृतम् ॥१७॥

१-१ घ नास्ति २-२ ख देवि त त्रिपुरामनुं ग देवि त त्रिपुराहनुं ङ देवि तन्त्रपुराहनुं ङ-प्रान्ते त्रिपुरामन्त्रमुत्तमं

अथोड्डामरे[१]—

अष्टादशात्मका[२] ज्ञेया[२] विद्या श्रीषोडशाक्षरी।

परं यत् सूचितं देवि सद्यो-मुक्ति-प्रदं स्मृतम् ॥१८॥

१ क ततोड्डामरे ख अतोड्डामरे च उड्डामरे २-२ ग अष्टात्मिका च विज्ञेया ङ अष्टात्मिका ज्ञेया च छ अष्टादशात्मिका ज्ञेया(छ ज्ञेय)

तथा[१] स्व-कृतौ त्रिपुराशिरोमणौ[१]—

अष्टात्मकम् इदं बीजं[२] त्रिपुरायाः स्मृतं यथा[३,२]।

अष्टभिर्[४] वत्सरैर् वापि मासैर् अष्टभिर् एव च[४]।

अष्टभिर् दिवसैर् वापि जानीयान् मुक्ति-लक्षणम् ॥१९॥

१-१ क तथा च स्वकृतो मंत्रो त्रिपुरा च शिरोमणौ ख तथा च स्वकृतो त्रिपुराशिरोमणौ ज्ञेयं च त्रिपुराशिरोमणौ २-२ च छ प्रोक्तं त्रिपुरायास्तु बीजकं ३ ख ङ तथा ४-४ क नास्ति

## (२) [ अथ लक्ष्मी-भेदौ ]

लक्ष्मी-भेद-द्वयं[1] ज्ञेयं भाषितं कृत्ति-वाससा ।
लक्ष्मीश् च रुक्मिणी चैवं[2] त्रिभिर् वर्षैः फलं लभेत्[3] ॥२०॥

१ ख लक्ष्मीबीजद्वयं ग लक्ष्मभेदद्वयं २ क देवि ३ ☞ इतोऽवधिः घ-पाठः परिशिष्टे निवेशितः । ख भवेत्

## (३) अथ सरस्वती-भेदाः[1]

उक्तं[2] च[2] कामिनीकल्पे[3]—

वाग्देवी च तथा वाणी सरस्वत्य् अनलप्रिया[4] ।
भेदास्[5] ते ते तु विख्याताः[5] फलं वर्ष-चतुष्टये[6] ॥२१॥

१ क ख सरस्वती(ख °ति)भेदानि २-२ घ च नास्ति ३ घ नास्ति ४ क अनिल-प्रियः छ °प्रियं ५-५ क ख भेदान्येतानि ख्यातानि ग भेदास्तैस्ते तु विज्ञेयाः ङ च छ भेदास्त्वेते(ङ भेदास्त्वते) तु(छ नास्ति) विख्याताः ६ क ग °चतुष्टयं

## (४) ततस्[1] तारा-भेदाः[2]

उक्तं[3] च[3] वामकेश्वरे[4]—

तारापि तारिणी[5] चैवं[6] एकजटापि[7] तथैव च ।
नीलसरस्वती[8] चैवम्[9] उग्रतारा प्रकीर्तिताः ।
तारा-भेदास्[10] तु[10] पञ्चैवम् अक्षोभ्येन[11] प्रकाशिताः[12] ॥२२॥

१ च अथ २ क ख ताराभेदानि ३-३ च नास्ति ४ ग घ ङ भैरवतंत्रे च वामकेश्वरतंत्रे ५ ख तारणी ग छ तारिणे ६ ग च चैवम् ७ घ स्वैकजटापि ८ क ङ नीलासरस्वती ९ घ चैव १०-१० क च ताराभेदानि ११ क अक्षोभ्योन ग घ ङ अक्षोभ्यं मे १२ क ख प्रकाशितं घ °ता

## (५) अथ भुवनेश्वरी-भेदाः[1]

उक्तं[2] च[2] भैरवे[3] तन्त्रे[3]—

भैरवी भीम[4]रूपा च भीमापि भुवनेश्वरी ।
भक्त्या फल-प्रदा देवी नित्यं वर्ष-चतुष्टये[5] ॥२३॥

१ क ख °भेदानि ग भुवनीश्वरी° च भुवनेश्वरीमंत्राः २-२ क च नास्ति ३-३ क नास्ति । च छ भैरवतंत्रे ४ क घोर° ५ क °चतुष्टयं

## (६) अथ मातङ्गी-भेदाः[1]

उक्तं[2] च[2] रुद्रयामले[3]—

मातङ्गी-सुमुख्योर्[4] ऐक्यं मतङ्ग-मुनिना[5] स्मृतम् ।
मातङ्गी[6] चक्रिणी देवी कुब्जिका शाम्बरी[7] तथा ।
देव्या भेदास्[8] तु चत्वारः[9] फलं वर्ष-चतुष्टये[10] ॥२४॥

१ क ख °भेदानि  २-२ ख-वर्जम् अन्यत्र नास्ति  ३ क ग नास्ति  ४ क मातंगी-स्वमुखेर् ग घ मातंगसमुख्योर् (घ °मुखेर्) छ मातंगीसुमुख्यार्  ५ ख मातगीमत्तंममनु-निना घ ङ मातंगमुनिना  ६ ख मातंगि ग ङ मातंग  ७ ? क वांभरी ख शांभरी घ शांभडी  ८-८ क वीजानि ख भेदानि  ९ क ख ग ङ चत्वारि घ चत्वारी  १० घ वर्षद्वये तथा

## (७) अथ[1] शारिका-भेद-द्वयम्[2]

शारिकापि तथापर्णा फल-दापि द्वि-वर्षके[3][1] ॥२५॥

१-१ क मातङ्गी-भेद-पूर्वं निविष्टम्  २ ग शारिकावीजद्वयं घ शारिका  ३ ग घ च द्विवार्षिके

## (८) ततो[1] राज्ञी-भेदौ[2]

राज्ञी[3]-भेद-द्वयं प्रोक्तं[4] राज्ञी च[5] खगगामिनी[5] ।
द्वि-वर्ष-मध्ये भक्त्या[6] च[6] राज्ञी[7] राज्यं प्रयच्छति ॥२६॥

१ ग घ ङ छ नास्ति । च अथ  २ क ख °भेदानि अन्यत्र °भेदा:  ३ क ख च राज्ञा छ राज्ञ्या  ४ छ उक्तं  ५-५ च च पग° छ चापग°  ६-६ घ भक्तिभ्य:  ७ ख राज्ञा

## (९) [ भेडा भेद-विहीना ]

भेडा[1] भेद-विहीना च[2] प्रजा-भाग्य-विवर्धिनी ॥२७॥

इति[3] कुलिकार्णवे[4] ॥

१ क ख ङ भीडा  २ च छ तु  ३ क ग घ ङ नास्ति  ४ घ नास्ति

## (१०) अथ ज्वालामुख्या[1]ः

उक्तं[3] च[3] ज्वालाशिरोमणौ—

ततो[3] ज्वालामुखी चैवम्[4] अम्बिका[5] भगरूपिणी ।
यथेष्ट-फल-दं[6] प्रोक्तं[7] ज्वाला-भेद-त्रयम् इदम् ॥२८॥

१ क ख ज्वालभेदानि । अधिपाठः च भेदाः  २-२ च नास्ति  ३ ग घ ङ तारा  ४ घ चैव  ५ छ अम्भिका  ६ घ °दा  ७ घ प्रोक्ता

एतासां दश-विद्यानां नाना-भेदम् उदाहृतम् ॥२९॥

## (११) तत्रादौ[1] त्रिपुरा-भेदाः[2]

उक्तं[3] च मुण्डमाला-तन्त्रे त्रिपुरातिलके च[3]—

त्रिपुरा भैरवी विद्या हिङ्गुला चण्डिका तथा ।
चामुण्डा[4] नारसिंही च ह्यैन्द्री[5] हैमवतीश्वरी ॥३०॥

१ च अथ। अधिपाठः क ख छ त्रिपुरातिलके २ क °भेदानि ३-३ घ नास्ति। ग ङ (व्यत्यासेन) त्रिपुरातिलके मुंडमालातंत्रे च (ग नास्ति) च त्रिपुरातिलके ४ ग घ ङ चामुंडी ५ ? क ह्यैद्रि छ ह्यैद्री

मृडानी वारुणी दुर्गा महात्रिपुरसुन्दरी ।
देव्या द्वादश भेदास्[1] तु प्रोक्ता ह्य् एते त्रिशूलिनां[1] ॥३१॥

१-१ क ख भेदानि प्रोक्तान्येतानि शूलिना

—⁓—

## १७–२८

## [ अथ त्रिपुरा-मूलम् ]

श्रीं[1] ह्रीं सौः[2] त्रिपुरे ऽपि चर्मवसनं[3] कामः शरद् भैरवि ।
ओं ह्रीं श्रीं हिङ्गुले तथैव कमला[4] क्षामों[5] त्र्यक्षं चण्डिके[4] ॥३२॥

१ प्राक्पाठः सर्वत्र प्रकाशं २ क ग सौ ख सौः ३ ख चंद्रवसनं ग चंद्रवाससे घ चंद्रवादने ङ चंद्रवसशे ४-४ क नास्ति ५ घ नास्ति

चामुण्डे[1] ह्रें[2] सकल ह्रीं[3] सकलें[3] ह्रीं[4] श्रीं[4] नारसिंहि तथा ।
ह्यैन्द्रि ? चारणम् एव ह्रीं च मदनः कामं परा रुक्मिणी[1] ॥३३॥

१-१ क नास्ति २ घ नास्ति ३-३ ग नास्ति। ख घ ङ च छ ह्रीं च सकल (ख °लं) ४-४ ग (व्यत्यासेन) श्रीं ह्रीं

देवि[1] हैमवतीश्वर्य् अपि[1] कमला लज्जा तथा मन्मथः ।
चन्द्रो वारुणि वा कं[2] एं[3] ईं[3] ल परा दुर्गे स्मृता शंभुना ॥३४॥

१-१ क नास्ति। ख हैमवतिश्वर्यापि ग हेमवतीश्वर्यपि घ हैमवतीचश्वर्य ङ च छ हैमवति-श्वर्यपि (ङ °षि) २ क नास्ति। ख कृ ग का ३-३ च (व्यत्यासेन) ई ए

श्रीं ह्रीं क्लीं चरणं शरद् अपि तथा त्र्यक्षं परा रुक्मिणी ।
विद्या श्री विपरीत-भाव-सहिता स्यात्[1] षोडशात्मा विधिः ॥३५॥

१ क च छ सत्

[1][ प्रकाशम्
श्रीं ह्रीं सौः त्रिपुरे ॥
ऐं क्लीं सौः भैरवि ॥
ओं ह्रीं श्रीं हिङ्गुले ॥
श्रीं ह्रीं ओं चण्डिके ॥
चामुण्डे ह सकल ह्रीं ॥

सकल ह्रीं श्रीं नारसिंहि ॥

ह्यैन्द्रि ? ऐं ह्रीं क्लीं ॥

क्लीं ह्रीं श्रीं देवि हैमवतीश्वरि ॥

श्रीं ह्रीं क्लीं [मृडानि] ॥

ऐं वारुणि क ऐं ई ल ह्रीं ॥

दुर्गे श्रीं ह्रीं क्लीं ऐं सौः ॥

ओं ह्रीं श्रीं [ महात्रिपुरसुन्दरि ] ॥][1]

१-१ सर्वेषु कोशेषु नास्ति

[1]देव्य्[2] उवाच

महेश्वर त्रि-काल-ज्ञ[3] शरणागत-वत्सल ।

भेदैर् युतानां[4] देवीनां मनुं[5] त्वं वक्तुम् अर्हसि[1] ॥३६॥

१-१ घ नास्ति २ ख ग ङ श्रीदेव्यू ३ च त्रिकाल ४ ख युक्तानां ५ क ग च मनुस्

[1]ईश्वर उवाच[2]

दयया तव देवेशि तद् वक्ष्यामि समासतः[1] ॥३७॥

१-१ घ नास्ति २ ङ नास्ति

## २९

## [1]अथ श्रियः

यद् उक्तं भैरवे[2] तन्त्रे[1]—

ओं ह्रीं[3] श्रीं हरिणाक्षी[4]-बीज-द्वयं [5]फल-प्रदं सर्वैः[5] ।

त्र्यक्षं ह्रीं शक्ति-नीरम् अन्ते प्रोक्तम् अपि[6] धूर्जटिना ॥३८॥

१-१ क ख छ (व्यत्यासेन) यदुक्तं भैरवे(क [०]वी-) तंत्रे । अथ श्रियः घ अथोक्तभेदानां मंत्राः च अथ भैरवीतंत्रो श्रियः २ ग ङ भैरव- ३ क ह्रां ४ क च छ हरिणाक्ष्या

५-५ घ नास्ति ६ ग घ नास्ति

## ३०

## अथ रुक्मिण्याः

ओं[1] ह्रीं चैवं तु रुक्मिण्यास् तारं लक्ष्मी पयस्[2] तथा ।

अन्ते प्रोक्तं महेशानि लक्ष्म्या[3] भेद-द्वयम् इदम्[1] ॥३९॥

छ[४]-बीजं च मया प्रोक्तं[५] ग्रन्थे वामकेश्वरे शिवे ॥३०॥ ॥छं[६]॥
[७]शनि-बीजौ द्वौ छं[८] जं[९][७] ॥

१ ग अक्षजं २ छ कीलं ३ ख घ छ सूति ग ङ मूर्ति ४ क ग ङ च छ छं° ५ ख ख्यातं ६ क ङ च छ छं ७-७ क नास्ति । घ (व्यत्यासेन) छ ज द्वौ शनिवीजौ ८ ङ छं ९ ख च छ ए ङ जं

स्तन-बीजं कुचं चैवम् उरोजो हृज्जम् एव च ।
जकारस्य मया ख्यातम् अन्यद् अनृतम् आवदेत् ।
[१]आगमालंकरणे[२] ऽपि[३] ग्रन्थे भैरव-निर्मिते[४][१] ॥३१॥ ॥ज॥

१-१ घ अपरं च मया ख्यातं मेकारस्या सुरेश्वरि कुलचूडामणौ ग्रंथे रचिते मांत्रिकोत्तमैः २ क °कारेणे ग ङ °करजे घ °कारणे ३ च छ नास्ति । ग ङ च ४ च छ भैरवेण विनिर्मिते

इच्छा-बीजं स्पृहा काङ्क्षा लिप्सा[१]-बीजं चतुष्टयम् ।
झकारस्य मया ख्यातम् असत्यम् अपरं स्मृतम् ।
त्रैलोक्य-प्रथिते[२] ग्रन्थे[३] देवि वै वामकेश्वरे[३] ॥३२॥ ॥झ॥

१ क ख ग घ लिशा° २ च छ °पूजिते ३-३ घ नास्ति

[१]यम-बीजं काल-बीजं कृतान्तं[२] समवर्तिनम्[३] ।
कीनाशं[४] मृत्यु-बीजं च ञकारस्य मया स्मृतम् ।
त्रिपुरासर्वस्वे[५] ग्रन्थे[१] त्रि-जगद्-दुर्लभे प्रिये ॥३३॥ ॥ञ॥
[६]काल-बीजौ द्वौ[७] ञं छं [८]चं[६] ॥

१-१ घ नास्ति २ क ग ङ कृतांत छ कूतांत ३ ख समवर्तितं ग समवर्ततं ४ ख ग केनाशं अन्यत्र कीशाशं ५ च त्रिपुरातिलके ६-६ च छ नास्ति ७ घ नास्ति ८ क ख नास्ति

गर्जितं स्वन-बीजं च स्तनितं रसितं तथा ।
टकारस्य मया ख्यातं स्व-तन्त्रे देव-वन्दिते ॥३४॥ ॥ट॥
पद्मं पङ्कज-पयोजौ नीरजम् अम्बुजं तथा ।
पञ्च ठकार-बीजानि कृत्रिमाण्य् अपराणि च ।[१]
मया ख्यातानि देवेशि[२] तन्त्रे[३] वै[३] वामकेश्वरे ॥३५॥ ॥ठं[४]॥

१ अधिपाठः क ठ २ घ सर्वेश्वे ३-३ क तंत्रैवै ख तंत्रैवं ग ङ तत्रैव घ तंत्रैवा च तत्रैवै छ तंत्रे वै ४ क नास्ति

सिंहिका सरसी-बीजं रेणुका-बीजम् एव च ।
अञ्जनी-बीजकं[१] ख्यातम् अनृतम् अपरं स्मृतम् ।
डकारस्य मया देवि ग्रन्थे वै रुद्रयामले ॥३६॥ ॥ड॥

१ घ °वीजका च °वीजम् आ-

[1]वायु-बीजम् अनिलं[1] च समीरणं[2] मरुत् तथा ।
[3]समीरं चाशुगं[3] ज्ञेयं वातं श्वसन-बीजकम् ।
ढकारस्य मया ख्यातम् [4]अन्यद् अनृतम् आवदेत्[4] ॥३७॥ ॥ढ॥
वायु-बीजौ ढ्वौ[5] ढं[6] यं भैरव-तन्त्रे[7] ॥
[8]आशुग-बीजौ ढ्वौ[9] णं ढं[8] ॥

१-१ च (व्यत्यासेन) अनिलं वायुबीजं २ क ग घ ङ च समीरण- ३-३ क ख समीरश्चाशुगं ४-४ च छ अनृतमपरं स्मृतं ५ क नास्ति ६ क ख ग च ठं घ वृं छ ट ७ च छ नास्ति ८-८ क ३८ श्लोकात् परम् ९ क ख ग च छ नास्ति

वाण-बीजं मार्गणं च पत्रिणम्[1] आशुगं तथा ।
णकारस्यानृतम् अन्यद् ग्रन्थे भैरव-तन्त्रके ॥३८॥ ॥ण॥

१ क यंत्रिणम् च छ पतत्रिणम्

रात्रि-बीजं तमो-बीजं [1]तामसी-बीजम् एव च[1] ।
क्षपा च क्षणदा-बीजम्[2] अन्यद् अनृतम् आवदेत् ।
कुब्जिकासर्वस्वे[3] ग्रन्थे तं-बीजं च मया स्मृतम् ॥३९॥ ॥त॥

१-१ क ख घ ङ तामसी(क °शी) च निशा तमः(क ततः ङ मतः) २ ग °वीयाम् ङ °वीयाद् च °वीचम् ३ घ तथा च कुब्जिका-

विल-बीजं च विवरं सुषिरं नाग-लोककम् ।
थकारस्य मया ख्यातं तन्त्रे वै कुलिकार्णवे ॥४०॥ ॥थ॥
चक्रि-बीजं व्याल[1]-बीजं सर्पः काकोदरोरगौ ।
भोगि-बीजं भुजङ्गं च भुजङ्गमम्[2] इति स्मृतम् ॥४१॥

१ ग घ ङ व्यालि° २ क भुजगमाम् च भुजगाताम्

दकारस्य मया ख्यातम् अनृतम् अपरं स्मृतम् ।
स्व-तन्त्रे देव-देवेशि दक्षिणामूर्तिना कृते ॥४२॥ ॥द॥
पुष्प-बीजं प्रसूनं च प्रसूतिः[1] सुप्रजा तथा ।
धकारस्यानृतम् अन्यत् [2]त्रिपुरातिलकं स्मृतम्[2] ॥४३॥ ॥ध॥

१ घ-वर्जम् अन्यत्र प्रसूति २-२ च छ मया ख्यातं सुरेश्वरि

[1]क्षार-बीजं च[1] लवणं सैन्धवं सूकरं वृकम्[2] ।
वाराहम् अनृतम् अन्यन् [3]मया ख्यातं सुरेश्वरि[3] ।
[4]त्रैलोक्य-प्रथिते ग्रन्थे त्रिपुरायाः शिरोमणौ[4] ॥४४॥ ॥न॥[5]

१-१ क ग घ क्षारवीजार्ति(ग °ति) छ क्षीरवीजं च २ ख कृकं ङ च छ तथा ३-३ च छ त्रिपुरातिलके स्मृतं ४-४ च छ नास्ति ५ क घ च ४६ श्लोकम् अत्र पठन्ति

[1]मत्स्यं च मीन-बीजं च शफरी-बीजम् एव च ।
झष-बीजं मया ख्यातं [2]ग्रन्थे छिन्नाशिरोमणौ[2] ॥४५॥

१ प्राक्पाठः ग दक्षिणाकृतब्रह्मस्थं स्वरछंदं देवताकृतं ङ दक्षिणाकृब्रन्मस्थं सुछंदं देवताकृतं
२-२ छ नास्ति । च तंत्रे त्रिपुरभैरववे

[1]कूर्म-मीन-पद-न्यासौ बीजार्णं[2] सदृशं शिवे ।
फकारस्य पकारस्य भेदो नास्ति परस्परम् ।
भाषणोद्धार-विषये लिखने प्रकृतिः पृथक्[1] ॥४६॥ ॥[3]पँ॥

१-१ ङ छ नास्ति । क घ च ४४ श्लोकात् परम् २ ? क वीजार्ण घ वीजार्णेण
३ घ छ नास्ति

[1]कूर्म-बीजं च कमठं[2] कर्कटो[3]ऽपि कुलीरकम् ।
कच्छपम् अनृतम् अन्यन् मया ख्यातं[1] च[4] भामिनि ।
शारदापटले ग्रन्थे त्रैलोक्य-प्रथिते शिवे[4] ॥४७॥ ॥फ॥

१-१ च छ नास्ति २ ग घ ङ कमलं ३ क घ ककरो ४-४ च नास्ति

ऊर्मिर्[1] वीचिस् तथा चैवं[2] तरङ्गस्[3] त्रितयं स्मृतम् ।
असत्यम् अपरं ज्ञेयं[4] मया ख्यातं सुरेश्वरि ।
[5]कालिकासर्वस्वे ग्रन्थे ब्रह्मणैव प्रकाशिते[5] ॥४८॥ ॥ब॥

१ क ङ च छ ऊर्मि- घ ऊर्मी- २ ख छ चैव ३ ख-वर्जम् अन्यत्र तरंगास्
४ ग घ ङ ज्ञानं ५-५ घ नास्ति

भद्रिका भास्वती भीमा भकारस्यानृतं परम् ।
तन्त्रे वै मुण्डमालायां मया ख्यातं सुरेश्वरि[1] ॥४९॥ ॥भ॥

१ क ख हि पार्वति(क °ती)

दुलि[1]-बीजं शिली[2]-बीजं मण्डूकं[3] दुर्दुरं[4] तथा ।
भेकी[5]-बीजं मया ख्यातम् असत्यम् अपरं स्मृतम् ।
आगमामृतमञ्जर्यां पर्वतेश्वर[6]-नन्दिनि ॥५०॥ ॥म॥

१ ? ख डलि° ग दूलि° घ डुलि° च दलि° २ ख शिलि° ग शिरो° घ शिला°
३ ख छ मंडकं ४ क छ दर्दुरं च दर्दुरी ५ क भेकि° ख वीकी° ग भीके
६ ख पर्वतीश्वर° ग पार्वतेश्वर°

वायु-बीजं तथा[1] वाग्मि-वाचालं वैश्य-बीजकम् ।
[2]वीरा शार्णं[2] तथा वापी मया ख्यातं स्व-तन्त्रके ॥५१॥ ॥य॥

१ क वशा ग वणा घ चशा २-२ ? ख च छ वीरबीजं

अग्नी रेफश् च वह्निश् च हुतभुग् हव्यवाहनः ।
रकारस्य मया ख्यातं श्यामा-तन्त्रे सुरेश्वरि ॥५२॥ ॥र॥

तमो-बीजं तथा ध्वान्तं मोहं तिमिरम् एव च ।
लकारस्य मया ख्यातं [1]स्व-तन्त्रे मुनि-निर्मिते[1] ॥५३॥ ॥लं[2]॥

१-१ घ ग्रंथे भैरवतंत्रके　२ ख ग ङ नास्ति । घ लं

[1]अभ्र-बीजं[2] च जीमूतम् अम्बुभृद् अवलं घनम् ।
वकारस्य मया ख्यातं [3]तन्त्रे वै वामकेश्वरे[3][1] ।
[4]भू-बीजं धरणी-बीजं वकारं[5] भाषितं मया[4] ॥५४॥ ॥वं[6]॥

१-१ ङ नास्ति　२ क घ अभ्रं मेघं　३-३ घ स्वतंत्रे मुनिनिर्मिते । अधिपाठः क ङ च छ ॥वं॥　४-४ घ नास्ति । ग ५३ श्लोकात् परम्　५ ग ङ लकारं　६ घ नास्ति । ङ ल व

[1]कल्याणं चैव शर्मापि शं शुभं च[2] चतुष्टयम् ।
शकारस्य मया ख्यातं[1] [3]ग्रन्थे भैरव-तन्त्रके[3] ॥५५॥ ॥श॥

१-१ घ नास्ति　२ ख ङ नास्ति । क ग व　३-३ घ नास्ति । ख ६० श्लोकात् परम् तंत्रे भैरवसंज्ञके

[1]शम्पा[2]-बीजं तडिद्-बीजं विद्युच् छतह्रदा रतिः[3] ।
ह्लादिनी-बीजकं चैवम् असत्यम् अपरं स्मृतम्[1] ।
मया ख्यातं सुरेशानि ग्रन्थे वै रुद्रयामले ॥५६॥ ॥षं[4]॥

१-१ ख ६० श्लोकात् परम्　२ क चंपा° ख शया° घ शम्पा°　३ ङ ततः च छ तथा　४ ङ च षं

शक्तिः[1] शर्मापि विज्ञेये शरच्-छङ्क [2]तथैव च ।
सकारस्य मया ख्यातं ग्रन्थे छिन्नाशिरोमणौ ॥५७॥ ॥सं[2]॥

१ ख ग घ ङ शक्ति-　२-२ ख ६० श्लोकात् परम्

[1]छवि-बीजं कान्ति-बीजं शोभापि[2] सुषमा तथा ।
आकाशं च हकारस्यानृतम्[1] अन्यन् मया स्मृतम्[3] ।
सिद्धसारस्वते[4] ग्रन्थे नित्यं मान्त्रिकै[5]-पूजिते ॥५८॥ ॥ह॥

१-१ ख ६० श्लोकात् परम्　२ क ख ग ङ शोभा भा घ सोभा भा　३ क श्रितं ग घ ङ श्रुतं　४ घ छ सिद्धिसारस्वते ङ सिंधुसारस्वते　५ क मातृक° ख ग मान्त्रिक°

देव-बीजं निर्जरं च त्रिदिशं[1] त्रिदिवेशकम्[2] ।
सुर-बीजं च गीर्वाणं लेखम् अमर-बीजकम् ।
क्षकारस्य मया प्रोक्तं कुलचूडामणौ प्रिये ॥५९॥ ॥क्षं[3]॥

१ क विदिशं ख ग त्रिदिवं(ख द्विरुक्तिः) ङ च छ त्रिदशं　२ च त्रिदवेशकं　३ च छ ६० श्लोकात् परम्

वर्णानां देव-देवेशि कोशं[1] प्रोक्तं[1] मया शिवे ।
नाना-मन्त्र-युतं देवि सर्वागम-विनिश्चितम् ॥६०॥

१-१ च छ कोशः प्रोक्तो

इति[1] श्रीदक्षिणामूर्ति-[2]विरचित उद्धारकोशे
सर्वागम-मन्त्र-सारे[3] सर्व-वर्ण-कोशाख्यानं नाम
पञ्चमः कल्पः[1] ॥

१-१ ख नास्ति । घ इति श्रीउद्धारकोशे मात्रिकाकेशो नामाध्यायः २ ङ श्रीदक्षिणामूर्तिमुनि°
३ ङ छ °सागरे



द्वि[1]-त्र्यक्षराणां[2] पृथङ् नाम क्रीं[3] श्रीं ह्सौः[4] तथा ।
पृथङ् नाम सुरेशानि सकलागम-निश्चितम् ॥१॥

१ ☞ सर्व एवायं कल्पः ख नास्ति । प्राक्पाठः क घ च ओं  २ क ग ङ अक्षराणां
३ ग ङ मं क्रीं  ४ क ह्सौं घ ह्सौ छ ह्सौस्

अथ वक्ष्यामि ते देवि तिस्रो भुवन-देवताः ।
दक्षिणामूर्तिना पूर्वम् ऋषीणां भाषिताः स्वयम्[1] ॥२॥

१-१ च नास्ति

भवानी देव-देवेशि द्वितीया बगला[1]मुखी ।
इन्द्राक्ष्य् अपि[2] तृतीया च तिस्रो भुवन-देवताः ॥३॥

१ क ग घ भगला°  २ ग घ सा

आसाम् अहं ते [1]मन्त्राणि वक्ष्या[1]मि शृणु पार्वति ।
[2]यस्य कस्य[2] न वक्तव्यं न वक्तव्यं वरानने ॥४॥

१-१ क (व्यत्यासेन) वक्ष्यामि मंत्राणि  २-२ च यस्मै कस्मै

## ८०

## तत्रादौ[1] भवानी-मन्त्रोद्धारः

[2]उक्तं च[2] मुण्डमाला-तन्त्रे[3]—

प्रणवं चैव द्वे पद्मे त्र्यक्ष-युग्मं परौ[4] पुनः[5] ।
हरिणाक्षी-द्वयं कूर्चं हरं ठ-द्वय-संयुतम् ॥५॥

१ क छ आदौ  च अथ  २-२ ग घ ङ च छ नास्ति  ३ च मुंडमालायां  ४ क ग घ ङ पुरा  ५ ङ मुतः  च मनुः

प्रकाशम्

ओं श्रीं श्रीं ओं ओं ह्रीं[1] श्रीं[1] श्रीं हूं फट् स्वाहा ॥[2]

१-१ क नास्ति । ग छ ह्रीं ह्रीं श्रीं  २ अधिपाठः ग घ ङ मूलं

८१

## अथ[1] बगलामुख्याः[2]

उक्तं[3] चागमलहर्याम्[4]—

तारवं[5] चैव मृद्-बीजं द्व्यक्षरं[6] समुदाहृतम् ।
मन्त्रं च द्वि-शिरो ज्ञेयं ततः पल्लवम् उद्धरेत् ॥६॥

१ क नास्ति २ क बगुलामुखीमंत्रोद्धारः ग भगलामुख्या ३ क-वर्जम् अन्यत्र नास्ति
४ ग घ ङ च छ आ° ५ च प्रणवं ६ ङ च छ द्व्यक्षरो

भगवति बगले[1]- च -मुखि देवि ततः पुनः ।
तथापि सर्व-दुष्टानां वाचं मुखं पदं तथा ॥७॥

१ क ग भगला

स्तम्भय-द्विस् तथा जिह्वां कीलय-द्विर् बुद्धिं तथा[1] ।
विनाशय-द्वि-वारं च मृत्तिका-बीजकं तथा ।
त्र्यक्षम् अन्ते पयो ज्ञेयं द्विपञ्चाशाक्षरो मनुः[2] ॥८॥

१ अधिपाठः ग स्तंभयद्विस्तथा जिह्वां २ क हनुः

### (४४) अथ[1] मृद्-बीजोद्धारः[2]

उक्तं[3] च[4] भैरव-तन्त्रे[5]—

मृद्-बीजं मृत्तिका-बीजं मृत्स्ना-बीजं प्रशस्तिका ।
मृत्स्नानृतं परं ज्ञेयं पर्वतेश्वर-नन्दिनि ॥९॥

१ ग ङ तत्र घ तत च छ तथा २ क °बीजोद्धाराणि घ मृद्बिवीजः ३ घ च नास्ति
४ ग घ ङ च छ नास्ति ५ घ नास्ति । क ग भैरवे तंत्रे

प्रकाशम्

ओं ह्लीं[1] भगवति बगलामुखि[2] देवि
सर्व-दुष्टानां वाचं मुखं पदं स्तम्भय स्तम्भय
जिह्वां कीलय कीलय बुद्धिं विनाशय विनाशय
ह्लीं[3] ओं स्वाहा ॥[4]

१ क हीं ग ङ छ क्लीं २ क भगलमुखि घ वगलमुखी ३ क हीं ग ङ क्लीं छ ग्लीं
४ अधिपाठः ग घ ङ छ मूलं

## ८२

## अथेन्द्राक्ष्याः[1]

उक्तं च[2] रुद्रयामले—

त्र्यक्षं कुन्ती-द्वयं देवि कूर्च-युग्मं तथैव च ।
प्रस्थ-बीजं परां पद्मां[3] चर्माणं च ततो ऽभिधर्म्[4] ॥१०॥

१ क अथेंद्राक्षीमंत्रोद्धारः ग अथेंद्राख्या च अथेंद्राक्षा २-२ क-वर्जम् अन्यत्र नास्ति
३ ग ङ पद्मं ४ घ भिधां च छ भियां

इन्द्राक्षि वज्र-हस्ते ऽन्ते लक्ष्मीं लज्जां च पुष्करम् ।
तीर-युग्मं द्वे[1] रसने[1] त्रासश् चन्द्रो हरं वनम् ।
इन्द्राक्ष्या देव-देव्याश् च द्यू अष्टाविंशाक्षरो मनुः ॥११॥

१-१ ग घ ङ (व्यस्यासेन) रसने द्वे

### (४५) अथ[1] प्रस्थ-बीजोद्धारः[2]

उक्तं च[3] शारदापटले—

प्रस्थ-बीजं सानु-बीजं शिखरं पुष्करं तथा ।
म्लौं[4]-बीजोद्धारम् एतद् धि चान्यद् अनृतम् आवदेत् ॥१२॥

१ च नास्ति । ग ङ तत्र घ ततो २ क °बीजोद्धाराणि ३-३ क-वर्जम्
अन्यत्र नास्ति ४ क ग घ ङ म्लौं°

प्रकाशम्

ओं क्रीं क्रीं हूं हूं म्लौं[1] ह्रीं श्रीं
ऐं इन्द्राक्षि वज्र-हस्ते
श्रीं ह्रीं म्लौं[2] हूं हूं[3] क्रीं क्रीं[3] ओं
ऐं फट्[4] स्वाहा[4] ॥

१ घ म्लौ ङ म्लों २ क घ म्लौ ङ म्लां ३-३ ग ङ क्रीं क्रीं ४-४ ङ (व्यत्यासेन)
स्वाहा फट् । अधिपाठः ग घ ङ मूलं

तिस्र एता मया ख्याता देवि भुवन-देवताः ।
दक्षिणामूर्तिना भक्त्या संसारे ऽस्मिन् प्रकाशिताः ॥१३॥

## ८३

## [ अथ खेचर्याः ]

अथाहं देव-देवेशि खेचर्या वच्मि वै मनुम् ।

याम् आश्रित्य लभेद् योगी खेचरीं सिद्धि-दां कलाम् ॥१४॥

उक्तं[1] च[1] विश्वयामले—

गीर्वाणाद् दशमं वर्णं चोद्धरेत् प्रतिलोमतः ।
तमो-बीजं ततो देयान्[2] माया-बीजं ततः परम्[2] ॥१५॥

१-१ क-वर्जम् अन्यत्र नास्ति　२-२ घ नास्ति (दृष्टि-प्लुतिः)

ततो[1] दद्याच् छरद्-बीजं कूटो[2] ऽयं परिकीर्तितः ।
मन्त्रं तुर्य-शिरो ज्ञेयं योगी दद्यात् ततो ऽभिधाम् ।
खेचर्यै च ततो[1] दद्याद् अन्ते[3] सौष्मकर्म्[4] एव च[3] ॥१६॥[5]

१-१ घ नास्ति (दृष्टि-प्लुतिः)　२ च कूपो　३-३ क मायावीजं ततः स्मृतं　४ ? क ध्रइमकं ग घ ध्रोइमकम् च ध्रौरमकम् छ ध्रौमकम्　५ अधिपाठः क ततो दद्याकरद्वीजं कूपेयं परिकीर्तितः

प्रकाशम्

मं ल ह्रीं सौः[1] खेचर्यै नमः[2] ॥

१-१ क म्ल्हीं ग घ ङ मं (घ म)ल ह र(ङ रं) सौ (घ सौः) । ङ पाठान्तरत्वेन मं ल म्लीं म्लीं च छ म्लीं सौः (च सौ)　२ अधिपाठः ग घ ङ च छ नमः

अथ वक्ष्यामि देवेशि[1] ध्यानान् आगम-निश्चितान् ।
एतासां देवतानां च ग्रहाणां देवै[3]-वन्दिते[2] ॥१७॥

१ ग घ ते देव ङ त देवि　२-२ घ नास्ति　३ घ छ चापि च वीर[°]

तथा सप्त-कुमाराणां ध्यानं[2] तन्त्रे[3] विनिश्चितम्[4] ।
तथा भेद-विहीनानां[1] शृणु पार्वति तत्त्वतः ॥१८॥

१-१ ग नास्ति　२ क ध्यानांस्　३ ङ तंत्र-　४ क विनिश्चितान्

इति श्रीदक्षिणामूर्ति-विरचिते[1] उद्धारकोशे[2]
त्रि-देवी-खेचरीणां[3] कोशाख्यानं[4] नाम
षष्ठः कल्पः[5] ॥

१ घ ङ नास्ति　२ ग नास्ति　३ क खेचरसर्वागमतंत्रसारे घ त्रिपुरदेवतादेवीखेचरी- च मृदेवीखेचराणां छ तिसृदेवीखेचरीणां　४ क कोशाख्यं घ उद्धारकोशो　५ क नास्ति । घ ध्यायः ङ पटलः । अधिपाठः क श्रीगणपतिसूर्याभ्यां नमः ॥ घ श्रीगुरवे नमः ॥



अथादौ दश-विद्यानां ध्यानं वक्ष्यामि त्वं[1] श्रृणु ।
वामकेश्वर-तन्त्रोक्तं त्रिपुरायाः सुरेश्वरि ॥१॥

१ क ख ग तं च छ त

दिव्याम्बराङ्कित-तनुं मिहिराग्नि-चन्द्र-नेत्राम्[1] ।
सुधांशु-मुकुटां[2] हिम-संनिभाभाम्[3] ॥२॥

१ ग च मिहराग्नि° घ मिहरां कराङनेत्रां २ च °मुकुटुकां छ °मुकटां
३ घ °सन्निभं च च °सन्निभां

सिंहासनां परशु-खड्ग-धरां भुजाभ्याम् ।
ब्रह्मेन्द्र-विष्णु-नमितां त्रिपुरां भजे ऽहम् ॥३॥
अथ वक्ष्ये श्रियो ध्यानं भाषितं रुद्रयामले ।
मुनि-साधक-गीर्वाण-विप्र-वर्गैः सुपूजिते ॥४॥
लक्ष्मीं[1] पद्मासन-गत-कटिं[2] सूर्य-शीतांशु-नेत्राम् ।
उद्यद्-भास्वत्-कनकं[3]-रुचिं पद्म-शङ्खासि-पाणिम् ॥५॥

१ प्राक्पाठः घ ओं २ क °कटीं ३ क ख °करच° घ °करक° च छ °करचय°

नाना-मुक्ता-मणि-सुशकलां[1]भूषिताङ्गीं[2] द्वि-बाहुम् ।
नित्यं[3] लोक-त्रितय-फल-दां नौम्य् अहं भक्ति-पूर्वम् ॥६॥

१ ? ग नानामुक्तिस्वकलशा° घ °सकला° ङ °सुशकलशा° च °सुकशला° छ °सुशविलां
२ क च छ °भूषितांगां ख भूषितांगि ३ च छ नित्य-

अथ वक्ष्यामि वाग्देव्या ध्यानं विद्या-प्रदं शिवे ।
तन्त्रमुक्तावलौ ग्रन्थे दुर्लभे त्रि-दिवे[1] ऽपि च[1] ॥७॥

१-१ च त्रिदिवैरपि

वाणीं[1] पूर्ण-निशाकरोज्ज्वल-मुखीं कर्पूर-कुन्द-प्रभाम् ।
चन्द्रार्धाङ्कित-मस्तकां निज-करैः संबिभ्रतीम्[2] आदरात्[2] ॥८॥

१ प्राक्पाठः ख घ ओं २-२ ख घ संविभ्रतीं सादरात्

वीणाम् अक्ष-गुणं सुधाढ्य-कलशं विद्यां[1] च तुङ्ग-स्तनीम्[1] ।
दिव्यैर् आभरणैर् विभूषित-तनुं सिंहाधिरूढां[2] भजे[3] ॥९॥

१-१ क विद्याच्च तुरंगस्तनीं ख विद्या च तुंगस्तनी २ घ ङ हंसाधिरूठां (ङ °ढा)
३ क ग घ भजेत्

अथ वक्ष्यामि ताराया ध्यानं भैरव-तन्त्रके ।
देव्या भेद-विहीनाया मुनि-साधक-पूजिते ॥१०॥

देवीं पन्नगं[1]-भूषितां[2] हिम-रुचिं शीतांशु-शङ्ख-प्रभाम् ।
मुक्ता-रत्न-परीत-कण्ठ-वलयां रक्ताम्बरां बिभ्रतीम् ॥११॥

१ ख पन्ना° ग पन्नगां छ पन्नाग° २ ख भूषितं च भूषणं छ भूषणां

शूलाब्जासि-गदा-धरां सुर-गणैर् वैकुण्ठ-मुख्यैः स्तुताम् ।
नित्यं लोक-त्रयैक-रक्षण-परां तारां त्रि-नेत्रां भजे[1] ॥१२॥

१ घ भजेत्

अथाहं भुवनेश्वर्या ध्यानं वक्ष्यामि तच्[1] छृणु ।
साधकेष्ट-प्रदे ग्रन्थे निःस्मृतं[2] रुद्रयामले ॥१३॥

१ क तं २ क ग निःसृतं ख निंसृते घ निस्मृते

उ[1]द्यद्-भानु-सहस्र-संनिभ-मुखीं पीन-स्तनीं पद्म-गाम्[2] ।
दोर्भिर् अङ्कुश-पाश-पुस्तक-जयान्[3] संबिभ्रतीं[4] सादरात्[5] ॥१४॥

१ प्राक्पाठः ख घ ओं २ च पद्मनीं ३ ? क ख ङ च °जयात् घ जयां
४ क ग संविभ्रति ख °तिं च °ती ५ क ङ सादरं ग मादरं

ब्रह्म[1]-विष्णु[2]-महेश्वरेन्द्र-मुनिभिर् नित्यं स्तुतां वन्दनैः ।
स्तोत्राद्यैर् भुवनेश्वरीं त्रि-नयनां हृत्-पङ्कजे ऽहं भजे ॥१५॥

१ क ख घ छ ब्रह्मा° ङ ब्रह्मो° २ ङ °पेंद्र°

अथ वक्ष्यामि मातङ्ग्या ध्यानं पर्वत-नन्दिनि ।
कुब्जिकासर्वस्वे ग्रन्थे[1] ममाप्य् अत्यन्त-दुर्लभे ॥१६॥

१ घ ङ तंत्रे

चे[1]न्द्रार्धाङ्कित[2]-शेखरां त्रि-नयनां कोटीन्दु-सूर्य-प्रभाम् ।
नाना-रत्न-सहस्र-बद्ध-रसनां[3] प्रेतासने संस्थिताम् ॥१७॥

१ प्राक्पाठः ख ओं २ क ग ङ °र्धांकृत° ३ ग नानावद्धसहस्रचंद्ररशनां ङ च °रशनां

शङ्खं तोमर-पट्टिसाब्जं[1]-युगलां[2] दोर्भिर् वहन्तीं मुदा[3] ।
ध्याये ऽहं हृदये सदा भगवतीं मातङ्गिनीं हारिणीम्[4] ॥१८॥

१ क °पट्टिसाच° ख °पटीसौब्जि° ग घ °पट्टसब्जि° २ क °युगमं ग °युगलान्
३ ग सदा घ मुदां ४ क ग घ हारणीं

अथ वक्ष्ये महेशानि शारिका-ध्यानम् उत्तमम् ।

आगमामृतमञ्जर्यां निःस्मृतं[1] दुर्लभं जनैः ॥१९॥

१ ङ निस्मृतं अन्यत्र निःसृतं

श्री[1]-शङ्ख[2]-चक्र-मुसलाम्बुज[3]-युग्म-हस्ताम् ।
नागेन्द्र-हार-वलयाङ्कित-कण्ठ-मालाम्[4] ॥२०॥

१ प्राक्पाठः ख घ ओं २ ख श्रीं ३ क च °मुसुलांवुज° ख °मुशुलांवुज° ग °मुसुलाब्ज° ङ °मुसलाब्ज° ४ च °वालां

सिन्दूर-कुङ्कुम-सहस्र-मरीचि-दीप्तिम्[1] ।
श्रीशारिकां त्रि-नयनां हृदये स्मरामि ॥२१॥

१ ख °प्तां घ °प्री च °प्ति

अथ वक्ष्यामि देवेशि राज्ञी-ध्यानम् अनुत्तमम्[1] ।
वामकेश्वर-तन्त्रोक्तं पर्वतेश्वर-नन्दिनि ॥२२॥

१ ङ उत्तमम्

शीतांशु[1]-बालार्क-कृशानु[2]-नेत्राम्[3] ।
चतुर्-भुजाम् एण-त्वग्-आसन-स्थाम् ॥२३॥

१ प्राक्पाठः ख घ ओं २ क शीतांशुभ्रशुभालार्क कुशां° ख शीतांशुभ्रशुवा° ग °कृषाण° ङ °कृशानुं ३ क त्रिनेत्रां ख नेत्रो

शङ्खाब्ज-शूलासि-धरां[1] महेशीम्[2] ।
राज्ञीं[3] भजे ऽहं तुहिनाद्रि-रूपाम् ॥२४॥

१ ख घ °शूलाशिधरां छ °शूलाधिधरां २ ख महेशिं ङ महीशीं ३ क ग च राज्ञीं घ राज्ञी

अथ वक्ष्यामि भेडायां[1] ध्यानम् इच्छा[2]-फल-प्रदम् ।
निःस्मृतम्[3] आगमोद्द्योते[4] मया विरचिते स्वयम् ॥२५॥

१ क ङ भीडाया २ क घ इक्ष्या° ३ क निःसृताम् ख घ निसृत्य ग निस्मृताम् ङ निःसृतरया- ४ क आगमंद्योते ख अमगमेकल्पै घ अमागमंकल्पे ङ गमोद्योगे

उद्यच्-छीतांशु-रश्मि-द्युति-चय-सदृशीम्[1] ।
फुल्ल-पद्मोपविष्टां वीणा-नागेन्द्र-शङ्खाम् ॥२६॥

१ प्राक्पाठः ख घ ओं

युध-परशु-धरां[1] दोर्भिर् ईड्यैश्[2] चतुर्भिः ।
मुक्ता-हारांशु[3]-नाना-मणि-युत-हृदयाम् ॥२७॥

१ क ग घ छ °धरा २ क ईज्यैश् ख इंध्वैश् घ ईढै ३ ख घ °हारंशु°

सीधु[1]-पात्रं वहन्तीं[2] वन्दे भेडा[3]-भवानीम् ।
प्रहसित[4]-वदनां साधकेष्ट[5]-प्रदात्रीम् ॥२८॥

१ क ग घ ङ सिंधु° ख शिंधु° च छ शीधु° २ ख वहंतिं च वहंती ३ क ङ भीडा° घ भेडां
४ क ग प्रहिसित° घ प्रहसति° ५ क सादकोष्ट° ख शाधकेष्ट° ग काधकेष्ट°

अथ वक्ष्यामि देवेशि ज्वालामुख्यां[1] अनुत्तमम् ।
ध्यानं मया विरचिते ग्रन्थे ज्वालाशिरोमणौ ॥२९॥

१ क ख च ज्वालामुख्याम्

ज्वाला[1]-परीतास्यं[2]-शिरो[3]रुहां तां सरोज-शङ्खासि[4]-गदा-धरां[5] च ।
सिंहासने[6] स्थापित-पाद-युग्मां[7] ज्वालामुखीं सु-हृदये[8] स्मरामि ॥३०॥

१ प्राक्पाठः ख घ ओं २ क °परीतासि° च °परीतस्यं° ३ क ग च छ °सरो°
४ ख °संख्यासि° घ °संखाशि° च °शंखाप्ति° छ °शंखस्य° ५ ख ग °धरं
६ ग ङ सिंहासन- ७ क ङ °पद्मां छ °पाणियुग्मां ८ क सुहृदयं ग हृदये
घ सहृदये ङ सद्धृदये च छ मद्धृदये

अथाहं भद्रकाल्याश्च[1] ध्यानं वक्ष्यामि [2]निःस्मृतम्[3] ।
स्वयं मया विरचिते तन्त्रे[4] वै वामकेश्वरे[2] ॥३१॥

१ क च छ ते २-२ ग नास्ति ३ क निःसृनं ङ निःसृतं
४ अतः परम् आवसानं छ नास्ति

[1]मुण्डं विश्वस्यं[2] कर्तुः कर-कमल-तले धारयन्तीं[3] हसन्तीम्[4][1] ।
नाहं तृप्ता वदन्तीं[5] सकल-[6]जन-चर्यं[6] भक्षयन्तीं[7] सदैव ॥३२॥

१-१ ग नास्ति । प्राक्पाठः ख घ ओं २ ङ (पठान्तरम्) विश्वस्य द्विः ३ क च धारयंती
ख धारयंति ४ ख सहंतिं ङ च हसंती ५ ख वदांती च वदंती ६-६ ग ङ °जनमिदं
७ ङ च भक्षयंतो

श्यामां विष्णुं गिरीशम् अरि-कुल-मथनं दोर्भिर् ईड्यैर्[1] धृतासिम्[2] ।
ध्याये ऽहं भद्रकालीं नव-जल-विषदां[3] प्रेत-मध्यासन-स्थाम् ॥३३॥

१ ? क च ईज्यै ख ईर्थैर् ग ईज्यैर् घ ईद्वै ङ रावा २ ख धृतास्यं ग वृतास्यां घ धृताश्यं
ङ हयंतीं च धृतासि ३ ङ प्रहसिनवजलदनिभां च °दपिभां

तुरी-ध्यानम् अहं वक्ष्ये निःस्मृतम्[1] आगमामृते ।
अस्मिंश्च चराचरे ख्याते ब्रह्मणैव[2] प्रकाशिते ॥३४॥

१ घ च निसृतम् २ क ङ ब्रह्मणा वै

नाना-रत्न-निबद्ध-चन्द्र-शकलां मौलौ जटाभिर् वृते ।
पाशाम्भोज-धरां हिमांशु-धवलां दोर्भ्यां द्वि-बाहुं शिवाम् ॥३५॥
सूर्येन्द्व-अग्नि-विलोचनां सित[1]-मुखीं प्रेतासने संस्थिताम् ।
ब्रह्मा-विष्णु[2]-महेश्वरैश्च च नमितां देवीं भजे ऽहं तुरीम् ॥३६॥[3]

१ ग ङ स्मित° २ ङ °पैंद्र° ३ अधिपाठः ङ इत्युद्धारकोशे षष्टः कल्पः६

अथादौ[1] छिन्नमस्ताया ध्यानं वक्ष्यामि निःस्मृतम्[2] ।
स्व-कृते[3] त्रिपुरायाश् च ग्रन्थे देवि शिरोमणौ ॥३७॥

१ क च अथाहं ख तथादौ २ क ख ङ च निःसृतं ३ ख ग सुकृतं च स्वकृतं

ऐणाङ्कांशु-परीत-भाल-फलकां[1] बालार्क-कोटि-प्रभाम् ।
ज्वाला-बद्ध[2]-महार्घ-रत्न-निचयां कन्दर्प-दर्पोज्ज्वलाम् ॥३८॥

१ प्राक्पाठः ख घ ओं २ घ °मध्य°

शूलास्य्-अङ्कुश-पाश-वेणु-मुसलाम्भोजान्[1] भयान् बिभ्रतीम् ।
भक्तेष्टां[2] छिन्नमस्तकां भगवतीं ध्याये हृद्-अब्जे सदा[2] ॥३९॥

१ क मुसु° ख °मुशुलान्भोजान् ग °भोज्या घ °मुशलान्भोजान् ङ °भोजा च °मुशलांभोजा
२-२ ङ भक्तैः पूजितपादपद्मयुगलां श्रीश्छिन्नमस्तां भजे

दक्षिणाकालिकायाश् च ध्यानं वक्ष्यामि निःस्मृतम्[1] ।
ग्रन्थे काली[2]रहस्ये ऽस्मिन् पर्वतेश्वर-नन्दिनि ॥४०॥

१ क ङ निःसृतम् २ क ग च काले°

ब्रह्मा[1]-विष्णु[2]-शिवास्थि-मुण्ड[3]-रसनां[4] ताम्बूल-रक्ताधराम् ।
वर्षा-मेघ-निभां त्रिशूल-मुसलौ[5] पद्मासि-पाशाङ्कुशान्[6] ॥४१॥

१ प्राक्पाठः ख घ ओं २ ङ °पेंद्र° ३ ख ग घ °मंड° ४ ख ग ङ °रशनां
५ क ख घ °मुसुलौ ग °मखला ङ °मुसुले च °मुशलौ ६ क °शां

शङ्खं[1] साहियुगं[2] धृतां[3] दश-भुजां[4] प्रेतासने[5] संस्थिताम्[5] ।
देवीं दक्षिणकालिकां भगवतीं रक्ताम्बरां तां स्मरे[6] ॥४२॥

१ क शंखां २ ? क स्याहियुगां ख घ शाहियुगं ३ घ धृतो ङ वरं ४ क °भुजा
ङ °भुजैः ५-५ ङ संविभ्रतीं प्रेतगां ६ घ स्मरेत्

अथ वक्ष्यामि श्यामाया ध्यानं पर्वत-नन्दिनि ।
श्यामा-तन्त्रे मया ख्यातं सकलागम-सागरे ॥४३॥
त्रैलोक्य[1]-पूजित-पदाम्बुरुह-द्वयां ताम् ।
कृष्णाम्बुभृत्[2]-सदृश-रूप-धरां त्रि-नेत्राम् ॥४४॥

१ प्राक्पाठः ख घ ओं २ ख वूलांवूभृत्°

शूलासि-शङ्ख-महतीं स्व[1]-भुजैर् वहन्तीम्[2] ।
श्यामां भजे[3] शव-शरीर-कृतासन-स्थाम् ॥४५॥

१ ख त्य° ग ख° घ स° ङ च २ घ वहंति ङ च °ती ३ क च स्मरे

अथाहं कालरात्र्यास् ते ध्यानं वक्ष्यामि निःस्मृतम्[1] ।
मया विरचिते देवि[2] तन्त्रे वै वामकेश्वरे ॥४६॥

१ क ग ङ निःसृतं   २ ख घ ग्रंथे

[1]शूलाब्ज-पाशाङ्कुश-[2]पद्म-हस्तां[2] [3]चतुर्-भुजां धूम-निभां[4] त्रि-नेत्राम् ।
सिंहासन-स्थां धृत-पीत-वस्त्रां[3] ध्याये महेशीं हृदि कालरात्रीम् ॥४७॥

१ प्राक्पाठः ख घ ओं   २-२ क च (व्यत्यासेन) °हस्तपद्मां   ३-३ घ नास्ति (दृष्टि-प्लुतिः)   ४ ख धूम्रनिभ्रां ङ सूर्यनिभां च धूम्रनिमां

नानाभरण-संयुक्ते देवि वक्ष्यामि त्वं शृणु ।
श्रीवज्रयोगिनी-ध्यानं निःस्मृतं[1] कुलिकार्णवे[2] ॥४८॥

१ क घ ङ निःसृतं   २ ङ कालिकार्णवे च कलकार्णवे

[1]इन्द्व्-[2]अग्नि-सूर्य-नयनां पाशाङ्कुश-धरां शिवाम्[3] ।
द्वि-भुजां सिंहम् अध्यस्थां भजे ऽहं वज्रयोगिनीम् ॥४९॥

१ प्राक्पाठः ख घ ओं   २ ग इंद्राग्नि°   ३ घ शुभां

अथ वक्ष्यामि वाराह्या ध्यानं तन्त्रे[1]-विनिश्चितम् ।
यथाभीष्ट-प्रदं देवि कुलचूडामणौ प्रिये ॥५०॥

१ ग घ ङ च तत्र

चन्द्रार्ध-चूडां द्वि-भुजां भुजाभ्यां शूलाङ्कुशौ श्याम-मुखीं वहन्तीम् ।
सूर्याग्नि-चन्द्री-कृत-[1]दृष्टि-पातां[1] ध्याये हृद्-अब्जे विमलां[2] वराहीम्[3] ॥५१॥

१-१ ङ °नेत्रपद्मां   २ क ङ विमला   ३ क वराही ग वहंतीं

अथ वक्ष्यामि देवेशि शारदा-ध्यानम् उत्तमम् ।
शारदापटले ग्रन्थे रचिते ऽपि मया स्वयम् ॥५२॥
[1]षड्-भुजां त्रि-नयनां स्मिताननां शाण्डिल्यर्षि-स्तुते[2]-पाद-पङ्कजाम् ।
पर्वते[3] स्थितवतीं[4] धृत-शूलां शारदां[5] भगवतीं हृदि ध्याये[6] ॥५३॥

१ प्राक्पाठः ख घ ओं   २ ख ग शांडिलेनस्तुत°  घ शांडिल्येनस्तुति°  च शांडिल्यार्षिनुत°
३ ग घ पर्वत-  ङ च पर्व-   ४ क घ स्थितवती   ५ ख सरदा ग शारदा । च द्विरुक्तिः
६ घ ध्यायेत्

अथ वक्ष्यामि देवेशि त्वं[1] शृणु[1] ध्यानम् उत्तमम् ।
कामेश्वर्यास् त्रिपुरायाः सर्वस्वे तन्त्रकोत्तमे ॥५४॥

१-१ ङ (व्यत्यासेन) शृणु त्वं

[1]त्रि-लोचनां सूर्य-सहस्र-शोभां सिंहासन-स्थां द्वि-भुजां धृतासिम् ।
पीताम्बरां विष्णु-महेश-सेव्यां कामेश्वरीं तां हृदये स्मरामि ॥५५॥

१ प्राक्पाठः ख घ ओं

अथ वक्ष्यामि गौर्यास् ते ध्यानं भैरव-तन्त्रके ।
ग्रन्थे मया विरचिते पर्वतेश्वर-नन्दिनि ॥५६॥

[१]गौराङ्गीं[२] धृत-पङ्कजां त्रि-नयनां श्वेताम्बरां सिंह-गाम् ।
चन्द्रोद्भासित-शेखरां स्मित-मुखीं[३] दोर्भ्यां वहन्तीं[४] गदाम् ॥५७॥

१ प्राक्पाठः घ ओं २ घ च गौरांगी ३ क °मुखां ४ घ च वहंती

विष्ण्व्-इन्द्रा[१]म्बुज-योनि-शंभु-त्रिदशैः संपूजितांघ्रि-द्वयाम्[२] ।
गौरीं[३] मानस-पङ्कजां[४] भगवतीं[५] भक्तेष्ट-दां तां भजे[६] ॥५८॥

१ क विस्त्वंद्रा° ख वन्हिद्रा° ग विष्णवेंद्रा° घ विस्लिद्रा° च किल्विद्रा° २ क °द्वयीं
ख °द्वयं ३ क घ च गौरी ४ क ङ च °पंकजे ग °पंकजै ५ क घ भगवती
६ घ भजेत्

अथाहम् अन्नपूर्णाया ध्यानं वक्ष्यामि त्वं[१] श्रृणु ।
निःस्मृतं[२] भैरवे[३] तन्त्रे मया देवि प्रकाशिते ॥५९॥

१ क घ तं २ ख निःसृतं घ ङ निसृतं अन्यत्र निस्मृतं ३ क ग भैरवी-

[१]चन्द्रार्ध-मौलिं द्वि-भुजां त्रि-नेत्रां शूलाक्ष-माले द्वि-भुजैर् वहन्तीम् ।
एणासन-स्थां भुजगोपवीतां ताम् अन्नपूर्णां हृदये स्मरामि ॥६०॥

१ प्राक्पाठः ख घ ओं

कुलवागीश्वरी-ध्यानं वक्ष्यामि त्वं श्रृणु प्रिये ।
आगमामृतमञ्जर्यां दुर्लभायां ममापि च ॥६१॥
[१]त्रिशूलासि-धरां[२] दोर्भ्यां रक्तास्यां वह्नि-संनिभाम्[३] ।
त्र्य्-अक्षां सिंहासन-गतां कुलवागीश्वरीं भजे[४] ॥६२॥

१ प्राक्पाठः घ ओं २ ख घ त्रिशूलास्थ° ३ ख °सन्निभा च °प्रभां ४ घ भजेत्

अथ वक्ष्ये गणेशस्य ध्यानं गीर्वाण[१]-पूजिते ।
आगमार्णवपीपूषे[२] दुर्लभे भुवने ऽम्बिके ॥६३॥

१ क ख गिर्वाण° ग घ गीर्चाण° २ क आगमार्णवपीपूषे ख आमार्णवं च पीपूषे

[१]द्वि-चतुर्दश-वर्ण-भू-चितं[२] मुसलाम्भोज[३]-धरम्[४] अह्य्-उपवीतम्[५] ।
द्वि-मृगाधिप-गामिनं[६] त्रि-नेत्रं शिव-पुत्रं[७] द्वि-रदाननं[८] भजे ऽहम् ॥६४॥

१ प्राक्पाठः ख घ ओं २ ? घ °वर्णविभूषितं ३ क गंमुसलांभोज° ख मुसुलांभोज°
ग मुसुलाबोज° घ मुश° ङ गंमुसलांभोज° च गंमुशलांभोज° ४ क °धरांम् ङ °धरो
५ ? क अह्योपवीतं ख घ अह्युपीतं ङ रगोपवीतं च अहोपवीतं ६ च °मृगाधिपवाहनं
७ ख °पूत्रं च °सुतं ८ क °रताननं ख वरदाननं

अथ ध्यानं कुमारस्य वक्ष्यामि श्रृणु पार्वति ।
निःस्मृतम्[१] आगमोद्द्योते[२] मया विरचिते शिवे[३] ॥६५॥

१ क ख ङ च निसृतम् ग घ निस्मृतम्  २ क च आगमोद्योते ख अगमद्योत
ग घ आगमोद्योते(घ °त)  ३ ङ च स्वयं

हिमाद्रि[१]-श्वेतं[२] द्वि-भुजं भुजङ्गैः परीत-गात्रं शिखि-विष्टर-स्थम् ।
नागेन्द्र[३]-कन्या-प्रिय-पुत्रम् आद्यं हृदि स्मरे ऽभीष्ट-प्रदं कुमारम् ॥६६॥

१ प्राक्पाठः ख घ ओं  २ ग घ हेमा° ङ हिमाद्रिगौरं  ३ ख घ नगेंद्र°

हैहयस्य[१] ब्रवीम्य् एवं[२] ध्यानं तव कुतूहलात् ।
यथाभीष्ट[३]-प्रदं नृणाम् उड्डामर-विनिश्चितम् ॥६७॥

१ क हेहयस्य  ख मस्य  घ हैयग्रीवस्य  २ क च अहं  ३ क यथाभि°  ख घ यथाभिष्ट°

सहस्र-भुज-मण्डली-जिततमीचरेशाधिपम् ? ।
हिमांशु-सदृशाननं धृत-सहस्र-तूणीरकम् ॥६८॥
सिताम्बर-धरं सदा तुरग-राज-मध्य-स्थितम् ।
स्मरामि भुवनाधिपं हृदि तु कार्तवीर्यार्जुनम् ॥६९॥
अथ वक्ष्यामि देवेशि ध्यानं तस्य विनिःस्मृतम्[१] ।
मृत्युंजयस्य देवस्य ग्रन्थे कुब्जाशिरोमणौ ॥७०॥

१ क च निःसृतं घ निश्चितं

चन्द्रोद्भासित[१]-मूर्धजं सुर-पतिं पीयूष-पात्रं वहन् ।
हस्ताब्जेन सुधांशु-कोटि-विमलं हास्यस्य[२][३] पङ्केरुहम्[२] ॥७१॥

१ प्राक्पाठः घ ओं  २-२ ङ चंद्राम्रताम्लावितम्  ३ क च हास्यास्य  ग हासस्य

सूर्याग्नीन्दु-विलोचनं कर-तलैः[१] पाशाक्ष-सूत्राङ्कुशा- ।
-म्भोजान् बिभ्रतम् अक्षयं पशु-पतिं मृत्युंजयं तं स्मरे[२] ॥७२॥

१ ख करतले  २ क स्मरेत्

सुग्रीवस्याथ वक्ष्ये ऽहं ध्यानं पर्वत-नन्दिनि ।
कुलचूडामणौ ग्रन्थे निर्मितं[१] मन्त्र-सागरे ॥७३॥

१ क च निस्मृतं  घ निर्मितं

बालं[१] षोडश-हायनं कपि-पतिं वह्नि[२]-प्रभा-भास्वरम् ।
दोर्भिर् वृक्ष-गदा-धनुः-शर-चयान् संबिभ्रतं सादरात्[२] ॥७४॥

१ प्राक्पाठः घ ओं  २-२ ख नास्ति (दृष्टि-प्लुतिः)

वन्द्यं[१][२] देव-स्वरूपिणं[३] रघु-पतिं[४] चाराधयन्तम्[५] मुदा[१] ।
ध्याये ऽहं भगवन्तम् अर्क-तनयं सुग्रीवदेवं[६] हृदि ॥७५॥

१ १ ङ सीतामार्गणसक्रवानखलैराराध्यमानं भजे काकुत्स्यं भजमानमर्कजनयं  २,३ ग नास्ति
२,३,४ ख नास्ति (दृष्टि-प्लुतिः)  ५ ग घ चाधारयंतं  ६ घ सुग्रीवं

अथाहं ते हनुमतो ध्यानं वक्ष्यामि निःस्मृतम्[1] ।
कुलचूडामणौ ग्रन्थे पर्वतेश्वर-नन्दिनि ॥७६॥

१ क ङ च निःसृतं ख ग घ विस्मृतं

रामेष्ट[1]-मित्रं जगद्-एकै[2]-वीरं प्लवङ्ग-राजेन्द्र-कृत-प्रणामम् ।
सुमेरु-शृङ्गाभम् अचिन्त्यम् आद्यं हृदि स्मरे ऽहं हनुमन्तम् ईड्यम्[3] ॥७७॥

१ प्राक्पाठः ख घ ओं  २ ख गदेक° ग रजगदेक° ङ जगदेव°  ३ ग ईद्यं घ ईल्यं

अथ ते भैरवस्याहं ध्यानं वक्ष्यामि पार्वति ।
निःस्मृतं[1] भैरवे[2] तन्त्रे यथाभीष्ट[3]-फल-प्रदम् ॥७८॥

१ क च निःसृतं ख ग ङ निस्मृतं घ निसृतं  २ क ग भैरवी-  ३ ख यथाभिष्ट°

कपाल[1]-हस्तं भुजगोपवीतं कृष्ण-छविं दण्ड-धरं त्रि-नेत्रम् ।
अचिन्त्यम् आद्यं मधु-पान-सक्तं हृदि स्मरे[2] भैरवम् इष्ट-दं तम् ॥७९॥

१ प्राक्पाठः घ ओं  २ क भजे घ स्मरेद्

अथ वक्ष्यामि सूर्यस्य ध्यानं तन्त्रे[1]-विनिश्चितम् ।
त्रिपुरासर्वस्वे ग्रन्थे दक्षिणामूर्तिना कृते ॥८०॥

१ ख ग ङ च तत्र

प्रत्यक्ष[1]-देवं विषदं सहस्र[2]-मरीचिभिः शोभित-भूमि-देशम् ।
सप्ताश्व-गं सद्-ध्वजं[3]-हस्तम्[4] आद्यं देवं भजे ऽहं मिहिरं[5] हृद्-अब्जे ॥८१॥[6]

१ प्राक्पाठः घ ओं  २ ख राहस्रं घ सहस्रैर् च सहस्रं  ३ ? क ध्वज° ख सद्भुज°
ग द्ध्वज° घ सद्ध°  ४ क °सहस्रम् घ ङ °सहस्तम्  ५ क मिहदं घ मिहिर ङ मिहरं

६ अधिपाठः ख सू

अथ वक्ष्यामि सौम्यस्य[1] ध्यानं भैरव-तन्त्रके ।
यथाभीष्ट[2]-प्रदं सत्यं[3] सुरासुर-नमस्कृते[4] ॥८२॥

१ ग ङ सोमस्य  २ ख घ यथाभिष्ट° च यथाभीष्टफलं  ३ च नास्ति
४ ग च नमस्कृतं

सोमात्म[1]-जं[2] हंस[3]-गतं[4] द्वि-बाहुं शङ्खेन्दु-रूपं ह्यूं[5] असि-पाश-हस्तम्[6] ।
दया-निधिं भूषणैं[7]-भूषिताङ्गं बुधं स्मरे[8] मानस-पङ्कजे ऽहम्[3] ॥८३॥[9]

१ प्राक्पाठः घ ओं  २ ग सोमात्मजमिति  ३-३ ग नास्ति  ४ ख घ हस्तगतं
च हंसगतिं  ५ क च नास्ति  ६ ङ °पाणिम्  ७ ख भूषिते  ८ ख स्मरेन्

९ अधिपाठः ख बु

अथ[1] वक्ष्यामि शुक्रस्य ध्यानं तन्त्रे[2]-विनिश्चितम् ।
कुब्जिकासर्वस्वे[3] ग्रन्थे[3] ब्रह्मणैव प्रकाशिते[4][1] ॥८४॥

१-१ च ८७ श्लोकात् परम्  २ ख ग घ ङ च तत्र  ३-३ घ कुब्जिकापि च सर्वस्वे
४ क घ प्रकाशितं ख °तो

[1]संतप्त-काञ्चन-निभं [2]द्वि-भुजं दयालुं पीताम्बरं धृत-सरो[3]रुह-द्वंद्व-शूलम्[4] ।
क्रौंचासनं[5] च[6] सुरै[6]-सेवित-पाद-पद्मं शुक्रं स्मरे [7]द्वि-जयनं हृदयाम्बुजे[8] ऽहम्[2] [1] ॥८५॥

१-१ च ८४ श्लोकेन सह ८७ श्लोकात् परम् । प्राक्पाठः ख घ ओं   २-२ ग इत्यादि
३ क °शिरो° घ °सशे च °सरी°   ४ क °शुक्रौ ख °श्रूलं   ५ क चासन ङ क्रौञ्चासनं
६-६ क सुर° ख च शुर° ङ ह्यसुर° च असुर°   ७ क च त्रि°   ८ क हृदयंवुजे
ख हृदियंकुजे घ हृदियंवुजे ङ हृदियंकजे

अथ वक्ष्यामि जीवस्य श्रृणु पार्वति तत्त्वतः ।
ध्यानं भैरव-तन्त्रोक्तं सकलार्थ-प्रदं नृणाम् ॥८६॥
तेजो-मयं [1]शक्ति-त्रिशूल-हस्तं सुरेन्द्र-ज्येष्ठ-स्तुत-पाद-पद्मम्[2] [1] ।
मेधा-निधिं[3] मत्स्य-गतं ? द्वि-बाहुं गुरुं स्मरे[4] मानस-पङ्कजे ऽहम्[1] ॥८७॥[5]

१-१ ग शक्तिमित्यादि   २ ख घ °पंकजां(घ °जं)   ३ ख °नीधिं च °निधिर्
अन्यत्र °निधि-   ४ क ङ च स्मरेत्सदा   ५ अधिपाठः ख जी

अथ वक्ष्यामि चन्द्रस्य ध्यानं देवि श्रृणु प्रिये ।
निःस्मृतम्[1] आगमोद्द्योते[2] नाना-ध्यान-सरित्पतौ ॥८८॥

१ ख निस्मृतम् ग निस्मृताम् घ निसृताम्   २ क च आगमोद्योते ख ग घ आगमद्योते
ङ चागमोद्योते

[1]शङ्ख-प्रभम् एण-प्रियं[2] [3]शशाङ्कम् ईशान-मौलि-स्थितम् ईड्यं[4]-रूपम् ।
तमी-पतिम्[5] अम्बुजं[6]-युग्म-हस्तं ध्याये हृद्-अब्जे शशिनं ग्रहेशम्[7] [3] ॥८९॥[8]

१ प्राक्पाठः घ ओं   २ ख मेणप्रिये ग पेणप्रियं   ३-३ ग इत्यादि   ४ ख ईड्य° घ ईज्य°
५ घ तमापतिं   ६ ख घ नीरज°   ७ क ग्रहेंद्र ख गृहशं घ ग्रहेद्र
८ अधिपाठः ख चं

अथ वक्ष्यामि भौमस्य[1] ध्यानं तन्त्रे[2]-विनिश्चितम् ।
आगमामृतमञ्जर्यां [3]श्रृणुष्वैक-मनाः[4] प्रिये[3] ॥९०॥

१ ङ देवेशि   २ क ख ग ङ च तत्र   ३-३ ङ भौमस्यैकमनाः श्रृणु
४ ख घ °मना ग °मनः

[1]प्रतप्त-गाङ्गेय-निभं ग्रहेशं[2] सिंहासन-स्थं[3] कमलासि-हस्तम् ।
सुरासुरैः पूजित-पाद-पद्मं[4] भौमं दयालुं[5] हृदये स्मरामि ॥९१॥[6]

१ प्राक्पाठः घ ओं   २ ख ग गृहेशं   ३ ख °स्थां   ४ क ङ °युग्मं   ५ क घ दयालं
६ अधिपाठः ख भौ

अथ वक्ष्ये शनेर्[1] ध्यानं यथाभीष्ट[2]-फल-प्रदम् ।
निःस्मृतं[3] च महेशानि शुभ-दम् आगमामृते[4] ॥९२॥

१ क च शनैर् घ शने  २ ख यथाभिष्ट°  ३ क ख ङ च निःसृतं ग निस्मृतं घ निसृतं
४-४ घ शुभदमालयामृते ङ शुभदं चागमामृते च शुभदमृतसागरे

नीलाञ्जनाभं[1] मिहिरेष्ट-पुत्रं ग्रहेश्वरं पाश-भुजङ्ग-पाणिम्[2] ।
सुरासुराणां भय-दं द्वि-बाहुं स्मरे[3] शनिं[3] मानसे[4]-पङ्कजे ऽहम् ॥९३॥[5]

१-१ ग नीलांजनाभमित्यादि। प्राक्पाठः ख घ ओं  २ घ °मानं  ३-३ ङ (व्यत्यासेन) शनिं स्मरे  ४ ख नामसु  ५ अधिपाठः ख श

अथाहं[1] सैंहिकेयस्य[2] ध्यानं वक्ष्यामि त्वं[3] शृणु ।
निःस्मृतं[4] फल-दं नृणां तन्त्रे वै वामकेश्वरे ॥९४॥

१ घ अथ  २ क च सैंहिकेयस्य ख सौंहिकीयस्य घ सैहकेयस्य  ३ क तं
४ क ङ च निःसृतं ख घ निसृतं ग निस्मृतं

शीतांशु[1]-मित्रान्तकम् ईड्यं[2]-रूपं घोरं[3] च वैडूर्य-निभं द्वि-बाहुम्[4] ।
त्रैलोक्य-रक्षा[5]-परम्[6] इष्ट-दं च राहुं[7] ग्रहेन्द्रं[8] हृदये भजे[8] ऽहम् ॥९५॥[9]

१ प्राक्पाठः घ ओं  २ घ ईज्यं  ३ क ग चोरं च घोरं  ४ घ °बाहूं  ५ क घ °रक्ष्या°
६ ङ °प्रदम्  ७ घ राहूं  ८-८ ग ङ स्मरामि  ९ अधिपाठः ख रा

अथ वक्ष्यामि केतोश् च ध्यानम् आगम-निश्चितम्[1] ।
निःस्मृतं[2] आगमोद्द्योते[3] ग्रन्थे वै मन्त्र[4]-सागरे ॥९६॥

१ ख °विनिश्चितं  २ क ख ङ च निःसृतं ग निस्मृतम् घ निसृतम्
३ ख ग घ आगमद्योते  ४ ङ तंत्र°

लाङ्गूल-युक्तं भय-दं जनानां कृष्णाम्बुभृत्-संनिभम् एक-वीरम् ।
कृष्णाम्बरं शक्ति-त्रिशूल-हस्तं केतुं भजे मानस-पङ्कजे ऽहम् ॥९७॥[2]

१ प्राक्पाठः ख घ ओं  २ अधिपाठः ख के

अथ वक्ष्यामि देवेशि भवानी-ध्यानम् उत्तमम् ।
कुलचूडामणौ ग्रन्थे निःस्मृतं[1] भुवनेश्वरि ॥९८॥

१ क ङ च निःसृतं ख घ निसृतं ग निस्मृतं

अरि-शङ्ख-कृपाण[2]-खेट-बाणान्[3] स्व-धनुः[4] शूलक-तर्जनीं दधानाम्[5] ।
भय-दां[6] महिषोत्तमाङ्ग-संस्थां नव-दूर्वा-सदृशीं[7] भजे भवानीम् ॥९९॥

१ प्राक्पाठः ख घ ओं  २ ख अरीशंखंण°  ३ घ °बाणां ङ च °बाणान्  ४ क ग ङ सुधनुः ख स्वधनु च स्वधनः  ५ ग च दधानं  ६ क भयहां ग भवतां  ७ क °दुर्वासदृशीं
ख °दूवासदशीं ग °दूर्वांसदृशीं घ °दुर्गांशदृशीं

अथाहं बगलामुख्या[1] ध्यानं वक्ष्यामि निःस्मृतम्[2] ।

आगमामृतमञ्जर्यां सुरासुर-नमस्कृते ॥१००॥

१ ग भगला° २ ग-वर्जम् अन्यत्र निःसृतं ग निस्मृतं

नाना[1]-रत्न-निबद्ध-रम्य[2]-मुकुटां[3] पीताम्बरां भाग्य-दाम्[4] ।

घर्मांश्व[5]-अग्नि-शशाङ्क-रश्मि[6]-नयनां सिंहासन-स्थां शिवाम् ॥१०१॥

१ प्राक्पाठः ख घ ओं २ ख ग °रस्य° ३ क नास्ति । च °रसनां ४ ख °दं

५ क घ घर्मांश्व° ख धर्मांश्व° ६ ख °रस्मि°

सद्-गाङ्गेय-निभां[1] महार्घ[2]-मणिभिर् उद्भासिताङ्गीं[3] सदा ।

देवीं[4] श्री-बगला[5]मुखीं हृदि भजे भक्तेष्ट-दां[6] मुक्ति[7]-दाम् ॥१०२॥

१ क सद्गांगेयनिभां ख सच्चंजीयनीभां ग सश्चंडीयनिभां घ यच्चंडीयनिभां ङ पाठान्तरम् सश्चंडीशरतां च सद्गांगेय- २ ख घ महर्ध° ग महार्ध° ३ ख °सितांगिं घ °सितांगी° ४ क देवी च देवे ५ ग श्रीभगला° ६ क भक्तेष्टिदा ख भक्तप्रदां घ भक्तैष्ठिदां

७ क ङ च भुक्ति°

अथ वक्ष्ये शृणोषि त्वम् इन्द्राक्षी[1]-ध्यानम् उत्तमम् ।

निःस्मृतं[2] जगद्-ईशानि[3] ग्रन्थे वै रुद्रयामले ॥१०३॥

१ ख इंद्रछी° ग ङ इंद्राणी° च इंद्रक्ष्या २ क घ ङ निसृतं ख च निःसृतं ग निस्मृतं

३ क ख घ च °एशानि

मालास्य्[1]-अङ्कुश[2]-पद्म-युग्मक-धरां साहस्र[3]-नेत्रां शिवाम्[3] ।

मत्तैरावण-पृष्ठ-गां[4] शशि-मुखीं त्रैलोक्य-रक्षा-पराम् ॥१०४॥

१ प्राक्पाठः ख घ ओं २ क ख मालास्यंकुस° ग मालासिंकुश° च मालास्वंकुश°

३-३ ङ चक्षुःसहस्रांकितां ४ ग मंत्रैरावणष्टगां घ मत्तेरावतपृष्टगां

दोर्भिर् गान-रतां स्फुटाम्बुज-निभां[1] ब्रह्मादि-देवैः स्तुताम् ।

इन्द्राक्षीं[2] जन-मातरं हृदि[3] भजे कारुण्य-रूपां पराम्[4] ॥ १०५ ॥

१ क सरोरुहमुखीं च फुल्लांवुजनिभां २ ख इंद्राक्ष्यं च इंद्राक्षी

३ क च हरि ४ घ भजे

अथ वक्ष्ये महेशानि[1] खेचरी-ध्यानम् उत्तमम् ।

यां[2] ध्यात्वा खेचरीं[3] योगी[4] जीवन्-मुक्तो भवेत् कलौ[5] ।

[6]ग्रन्थे भैरव-तन्त्राख्ये[7] निःस्मृते[6] त्रिदशार्चिते ॥१०६॥

१ क च महादेवि २ क ग यं ३ क ख ग खेचरी ४ क देवि ५ ख कालौ

६-६ घ नास्ति ७ ख °तंत्राख्या ८ क ख घ च निःसृतं(ख °ते) ग ङ निस्मृतं (ग °ते)

विनिद्र[1]-कमलोत्पलैर् मुनिभिर् अर्चितांघ्रि-द्वयाम् ।

सितासित-कराननां[2] सित-करोज्ज्वल[3]-शेखराम्[4] ॥१०७॥

१ प्राक्पाठः ख घ ओं २ ङ °करांबुजां ३ क शितकरांज्वल° ख सितकंरोज्वल° अन्यत्र सितकरोज्वल° ४ क घ ङ च °छेखरां ख °छखरं

रवीन्दु[1]-शिखि[2]-लोचनाम् अभय-पुस्तकौ[3] बिभ्रतीम् ।
स्मरामि हृदि खेचरीं भुवन-मातरं सिद्धि-दाम् ॥ १०८॥

१ क रवींद्र° २ ग च °शशि° ३ ग °पुस्तंको ङ °पुस्तको

एतासां देव-देवेशि मन्त्र[1]-ध्यान-चयं[2] स्मृतम्[3] ।
यस्य[4] कस्य[4] न दातव्यं ग्रन्थम्[5] उद्धारकोशकम् ॥१०९॥

१ घ मंत्रा° च तंत्र° २ ङ °चयः ३ ङ स्मृतः ४-४ च यस्मै कस्मै ५ घ मंत्रम्

ऋषय ऊचुः

धन्यः स यस्य पुत्रस् त्वं सकलागम-पार-गः ।
जय त्वं स्व-गृहं गन्तुम् आज्ञापयितुम् अर्हसि ॥११०॥

श्रीदक्षिणामूर्तिर्[1] उवाच

गच्छध्वं मुनयः सर्वे क्षमध्वं कृपया मम ।
इत्य् उक्ता मुनयो जग्मुः स्व-गृहं मन्त्र-लालसाः ॥१११॥

१ ग घ च नास्ति

ईश्वर उवाच

दक्षिणामूर्तिना तेन दृष्ट्वा तन्त्रान् मनो-रमान् ।
कृतम् उद्धारकोशाख्यं ग्रन्थं गोप्यतमं कुरु ॥११२॥

देव्य्[1] उवाच

क्रीतास्मि भवतानेन ग्रन्थेनाहं सुरेश्वर ।
इत्य् उक्त्वा सु-महा-कुञ्जं[2] कैलासाद्रेश् च जग्मतुः ।
उभौ[3] ताव् अम्बिका[3] देवी देवश् च चन्द्र-शेखरः ॥११३॥

१ क श्रीदेव्य् २ क सहमाकुंजं ख स महाकुञ्वं ग ममहाकुंजं घ सासनुकुंजं च हसाकुजं ३-३ क ताशुभामंविका ख ओंभौताविंवका

इति श्रीदक्षिणामूर्ति[1]-विरचित उद्धारकोशे[2]
सकलागम-सारे[3] षोडश-देवी-सप्त-देवी-सप्त-कुमार-नव-ग्रह
-चतसृ-देवी-कोश-ध्यान-निर्णयो[4] नाम
सप्तमः कल्पः ॥[5]

१ ख श्रीदक्षिणामूर्तिमुनि° २ ङ उद्धारकोशाख्ये ३ क च °सागरे घ °शारे ४ क देविसप्त-कुमारनवग्रहचतश्रिदेवीध्यानविर्नयो ख खोडसदीप्रंनामंत्रध्यानश्रीविशालवर्णनं

ग घ ङ षोडशदेवीसप्तकुमारनवग्रहसप्तदेवीकोशध्याननिर्णयो

च सकलध्यानं निर्णयो

५ अधिपाठः क ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ॥ ॥

३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ३ ( ६४ वारान् )

ख संवत् १८५३ मीति वैशाखशुक्ला १४ भृगुवाशरे लिषत्तंतिवाडिशितावरायस्य शुभमस्तु ॥

ग समाप्तो यमुद्धारकोशः ॥ ॥ ॥ ॥ ॥ ॥ ओं नमो भगवते ह्रीं एकदंष्ट्राय

हस्तिमुखाय लंवोदराय उच्छिष्टमहात्मने ओं क्रौं गं घे घे स्वाहा १

घ समाप्तम् शुभ श्री सं १८९९ आषाढवदी मिथुनार्कभुक्तदिनाः १२

ङ समाप्तो यमुद्धारकोशः शुभाय भवतु लेखकपाठकश्रोतृणाम्

च संवत् १७३५ श्रावण शुद्रि १ लिपितं बुलाकी ब्राह्मणजो इसीपठनार्थं शुभमस्तु ॥ श्लो ६१६ ॥

## प्रथमं परिशिष्टम्

१

### घ प्रथमे कल्पे ५६ श्लोकात् परं ज्वालामुखी-मन्त्रावसानं पाठान्तरम्

आगमलहर्यां तारं परपिकमलाकामं विश्वं ततो वरेत्
भगवती माहेश्वर्यै चान्नपूर्णे पि ठद्वय अभेदः
कामं परापि कमला तारं विश्वं ततो वदेत्
तंत्रसारे प्सारिकपै
तारं कुर्चं श्रियं मायां शून्य सिंधुरमेव च
नाम श्मरी मनोरंते मंत्रो यं भुवि दर्लभं इत्युद्धार
ओं नमः शारदायै
तारं रमाशक्तिमायारश्मरी
नाम संवदेत् भगवत्यै शारदायै मनोरंते पराचनम् मंत्रोद्धार
प्रणवं माया च कमला शक्तिवाग्भवनन्मथौ
इद्राक्षीवज्रहस्ते च हरमंतेम्रिवल्लभा
ओं नमो वगलामुख्यै
मृत्स्नां तारं च देवेशि वगलामुखी सर्वदा
दुष्टानां वा च मुखकं पदं स्तंभययुग्मकं
युग्मं च कीलयं जिह्वा मनुठंद्वयमुत्तमं
ओं नमो महतर्यायै
तारकाज्योति प्रणवं मध्ये ताराभिधं न्यसेत्
अंते श्मरी महादेवि मंत्रो यं शत्रुसूदनः
त्रुं त्रां त्रों महातुर्यायै नमः ॥

## २

### घ द्वितीये कल्पे कालरात्री-मन्त्रात् परम् आ विंश-श्लोकं पाठान्तरम्

भैवागमतंत्रे
ओं नमो कुलवागीश्वर्यै
तारं लक्ष्मी कामद्विंभकुर्चकाक्षाभिधं ततः
चंद्रः पद्मास्पृहापद्मो वेश्यायद्यो वर्नं मनुः
ओं नमो पद्मावत्यै
तारं रमापराकामपद्मा च तीविचीति च
मम वरं देहियुग्मं नीरमयं हरं मनुः
कुब्जिकातंत्रे
ओं नमः पराशक्त्यै तारं कामपराशक्तेः
रमावस्त्रं ततो भिधम् वाग्भवं च द्वयं देवि मंत्रराजोयमीरितः
ज्ञानार्णवे
ओं नमो छिन्नमस्तयै
लज्जां लक्ष्मीं तथा मायां द्वादशकामथामपि
वैरोचनीवज्रये द्वे फट् स्वाहा मायया युते
आगमलतिकायां
नमो महालक्ष्म्यै
तारं रमां परं कामं शक्तिवीजं च
वाग्भेवं महालक्ष्मीप्रसीदेति युग्मं मायं कजत्रयं
तन्त्रोच्चये भैरवार्णवे
ओं नमो भवान्यै
तारं रमा रमा माया तारं
माया रमा रमा फडंतः हूं
समाख्यातं मंत्रः सर्वार्थसाधकः
ज्ञानसागरे



## द्वितीयं परिशिष्टम्

### पुरुष-नामानि

| | |
|---|---|
| अक्षोभ्य | १. १६, २. २, ३, २२ |
| अक्षोभ्यक | ३. २ |
| उद्दालक | ३. ४ |
| गालव | ३. ४ |
| दक्षिणामूर्ति | १. ६, १६, १८, ६४, २. ३, ३. २, ५, ६, ११, १२, १४, ५१$^{२}$, ७५, ४. १५, ५. ३, ४, १८, ४२, ६. २, १३, ७. ८०, १११, ११२ |
| मतङ्ग | २. २४ |
| मातङ्ग | ३. ४ |
| लोहित | ३. ४ |
| शङ्ख | ३. ४ |
| शाण्डिल्य | ३. ४, ७. ५३ |

## तृतीयं परिशिष्टम्

### नदी-पर्वत-नगर-नामानि

| | |
|---|---|
| रेवा (नदी) | १. ४, ७ |
| श्रीगर्भा (पुरी) | १. ४ |
| स्फाटिकोर्वीभृत् | १. १ |

## चतुर्थं परिशिष्टम्

### मन्त्र-नामानि

| | |
|---|---|
| अनलप्रिया | २. ४३ |
| अन्नपूर्णा | ३. ४१-४२ |
| अपर्णा | पृष्ठं ३२ |
| अम्बिका | पृष्ठं ३३ |
| आदित्य | ४. ६-७ |
| इन्द्राक्षी | ६. १०-११ |
| उग्रतारा | पृष्ठं ३० |
| एकजटा | पृष्ठं ३० |
| कामेश्वरी | ३. ३३-३५ |
| कार्तवीर्यार्जुन | ३. ५९-६० |
| कालरात्री | २. १४-१५ |
| कुब्जिका | पृष्ठं ३२ |
| कुमार | ३. ५७ |
| कुलवागीश्वरी | ३. ४३-४५ |
| केतु | ४. ३० |
| खेचरी | ६. १४-१६ |
| गणेश | ३. ५५-५६ |
| गौरी | ३. ३९ |
| चक्रिणी | पृष्ठं ३१ |
| चण्डिका | २. ३२ |
| चन्द्र | ४. १९ |
| चामुण्डा | २. ३३ |
| छिन्नमस्तका | २. ९, पृष्ठं ३४ |
| ज्वालामुखी | १. ६२ |

## पञ्चमं परिशिष्टम्

### बीज-नामानि

# षष्ठं परिशिष्टम्

## ध्यान-नामानि

| | |
|---|---|
| भौम | ७. ९०-९१ |
| मातङ्गी | ७. १६-१८ |
| मृत्युंजय | ७. ७०-७२ |
| राज्ञी | ७. २२-२४ |
| वज्रयोगिनी | ७. ४८-४९ |
| वाग्देवी | ७. ७-९ |
| वाराही | ७. ५०-५१ |
| शनि | ७. ९२-९३ |
| शारदा | ७. ५२-५३ |
| शारिका | ७. १९-२१ |
| शुक्र | ७. ८४-८५ |
| श्यामा | ७. ४३-४५ |
| श्री | ७. ४-६ |
| सुग्रीव | ७. ७३-७५ |
| सूर्य | ७. ८०-८१ |
| सैंहिकेय | ७. ९४-९५ |
| सौम्य | ७. ८२-८३ |
| हनुमत् | ७. ७६-७७ |
| हैहय | ७. ६७-६९ |

## सप्तमं परिशिष्टम्

### तन्त्र-नामानि

### वृतिस्थेष्व् (      ) अङ्केषु तन्त्रनामानि पूर्वस्माद् उद्धृतानि

| | |
|---|---|
| आगमलहरी | १. ३२, २. १०, ३. ७१, ७२, ४.२४, (२६), ६. ६ |
| आगमशिरोमणि | ३. ७३, ४. ११ |
| आगमसिन्धु | १. ४१ |
| आगमामृत | ७. ३४,९२ |
| आगमामृतमञ्जरी | ५. २५, ५०, ७. १९, ६१,९०,१०० |
| आगमार्णवपीयूष | ७. ६३ |
| आगमालंकार | १. २६,३९, ३. ३८, ७० |
| आगमालंकारण | ५. ३१ |
| आगमोद्द्योत | ७. २५,६५,८८,९६ |
| उड्डामर | १. २२,३७, २. १८, ३. ५९, ७. ६७ |
| उद्धारकोश | १. ११,१२,१३, १५, ७. १०९,११२ |
| कामिनीकल्प | २. २१ |
| कालरात्रीकल्प | २. १४ |
| कालिकासर्वस्व | ५. ४८ |
| कालीपटल | ४. १९ |
| कालीरहस्य | ५. ११, ७. ४० |
| कालीसर्वस्व | ३. ३६,(३७) |
| कुब्जाशिरोमणि | ७. ७० |
| कुब्जिकासर्वस्व | १. ४५, ४.१०, ५.९, २८, ३९, ७. १६, ८४ |
| कुलचूडामणि | १. ४९, ६०, ३. ४०, ५७, ६२, ५. १६, २६, ५९, ७. ५०, ७३, ७६, ९८ |
| कुलसिद्धसंतान | १. ४७ |
| कुलिकार्णव | २. २७, ५.४०,७.४८ |
| छिन्नारहस्य | १. २४, ४३, (४४), ३. ४७, ५. २४ |
| छिन्नाशिरोमणि | १. २९, २. ९, ३. ६१, ५. १९, ४५, ५७ |
| ज्वालाशिरोमणि | २.२८, ७.२९ |

# अष्टमं परिशिष्टम्

## मन्त्रोद्धाराः

### शब्दानाम् अर्था अपि सर्वत्र निवेशिताः

| | |
|---|---|
| अ | आत्मन्, पैतामह, मनः, मानस, स्वान्त, हृद् ५.५ |
| अं | धरारुह, पादप, भूरुह, वृक्ष ५. २१ |
| अः | ध्रौव, नाग, भाग्य, भावन, भूधर ५. २२ |
| अग्नि | र ५. ५२ रं १. ५९, ६०, ३. ६९ रां १. ५७ |
| अञ्जनी | ड ५. ३६ |
| अत्युग्र | ख्रीं ३. ४७ |
| अनिल | ढ ५. ३७ |
| अप् | स्वाहा १. ३७, ३. ६५, ६७ |
| अब्धि | रुं ३. ६६, ६९[२] |
| अभ्र | व ५.५४ वीं ३.६६,६८ |
| अमर | क्ष ५. ५९ |
| अम्बर | आ ५. ६ आं १. ५५, ४. ८ ह १. ५५ ह्मौः ४. ६, ८[२] |
| अम्बुज | ठ ५. ३५ ठः १. ५२ |
| अम्बुभृत् | व ५. ५४ वीं ३. ६८ |
| अम्भोज | ठः ३. ४५ |
| अर्कज | छ ५. ३० |
| अर्कबन्धु | घ ५. २७ |
| अली | ए ५. १५ |
| अवल | व ५. ५४ वीं ३. ६८ |
| अश्मरी | नमः १. ३९, ३. ६७, ४. ११, १९ |
| आ | अम्बर, ख, वैष्णव, व्योम ५. ६ शून्य ४. १९ (ह-रेति शब्दं संयोज्य शून्यानुस्वार-संयुतम्), ५. ६ |
| आं | पृष्ठं १६, ४६, ५२ अम्बर १. ५५, ४. ८ ख १. ५५ व्योम १. ५५, ४. ६ शून्य १. ५३, ५५, ३. ५९ |
| आकाश | ह ५. ५८ |
| आगस्त्य | औ ५. २० |
| आत्मन् | अ ५. ५ |
| आशुग | ढ, ढं ५. ३७ ण ५. ३८ णं ५. ३७ |
| इ | इन्द्र ५. ७ ऐन्द्र ५. ८ जिष्णु, मघवन्, मरुत्वत्, शैव, हरि ५. ७ |
| इच्छा | झ ५. ३२ झं ३. ४३, ४६ |
| इन्दु | द्रां ३. ३६ |
| इन्द्र | इ ५. ७ |
| ई | पृष्ठं ८, २. ३४, [पृष्ठं २८] ऐन्द्र ( द्विः ), धी, बुद्धि, मति, मेधा ५. ८ |
| उ | नन्दा, रुति, वान्त, वामन, सौर्य ५. ९ |
| उच्छून | छ्रीं १. ५१, २. ९ |
| उरग | द ५. ४१ |
| उरोज | ज ५. ३१ जं ३. ३८ |

**ऊ** ऐन्दव, कच, केश, मूर्धज, शिरोरुह ५. १०

**ऊर्ध्व** ऐ ५. १७ ऐं १. २८, २. ४१, ३. ६२, ४. ११

**ऊर्मि** ब् ३. ३३ (ऊर्मि-ध्वान्तौ द्वौ संयोज्य) ब ५. ४८ बं ३. ३७

**ऊर्मि-ध्वान्तौ द्वौ संयोज्य** } ब्लं ३. ३३

**ऋ** कल्मष, किंकरी, किल्बिष, पाप, पाप्मा, माङ्गल ५. ११

**ऋक्ष** त्रुं, त्रों, त्रौं २. ८

**ॠ** करुणा, कार्षिक, कृपा, दया ५. १२

**ऌ** गौर्व, जगत्, विश्व, व्यक्त ५. १३

**ॡ** गङ्गा, नाकवापी, शौक्र, स्वर्धुनी, स्वर्नदी ५. १४

**ए** पृष्ठं ८, २. ३४ अल्ली, एकादशी-मातृक, लता, वाराकी ५. १५

**एकादशी-मातृक** } ए ५. १५

**ऐ** ऊर्ध्व, चण्डिकेश्वर, चन्द्र, चर्मन्, चर्मवसन, चारण, चार्वङ्गी, मात्रा द्वादशका, राह्व, वाग्भव, वासना ५. १७

**ऐं** पृष्ठं ८$^{२}$, १०, १२, १४, १७, २१, २३, [२७], [२८$^{४}$], २९$^{२}$, [३०], ३०$^{६}$, ३१$^{२}$, ३४, ३८$^{२}$, ३९, ४३, ४६, ४७, ४९, ५३, ५४$^{२}$, ५६$^{२}$, ५८, ७०$^{२}$ ऊर्ध्व १. २८, २. ४१, ३. ६२, ४. ११ चण्डिकेश्वर १. २८ चन्द्र १. २८, [२. ३४], ३. ३५, ६०, ४. १७, ३०, ६. ११ चरण [२. ३५] चर्मन् १. २८, ६. १० चर्मवसन १. २८, [२. ३२] चारण १. २८, [२. ३३], ४. २२ चार्वङ्गी १. २८, ५१, [२. ४२], ४. १२ मात्रा द्वादशका २. १० वाग्भव १. २०, २२, २८, ३८, ४०, ६०, २. ४०, ४३, ३. २७, ७३ वासना १. २३, २८, ४८, २. १४, ३. २७, २८, ४४, ४. १४, १८, २५

**ऐन्दव** ऊ ५. १०

**ऐन्द्र** इ, ई (द्विः) ५. ८

**ओ** कैतव, तार, तारव, तोमा, त्रास, त्र्यक्ष, त्र्यम्बक, प्रणव ५. १९

**ओं** पृष्ठं ८, १०$^{३}$, १२, १३, १४, १६$^{२}$, १७$^{२}$, २१$^{२}$, २३, २. ३२, [पृष्ठं २७$^{२}$], [२८], २. ३८, ३९, पृष्ठं २९$^{७}$, [३०], ३०$^{८}$, ३१$^{६}$, ३२$^{५}$, ३३$^{०}$, ३४, ३७, ३९, ४१, ४२, ४३,

